# उपचारमाला

प्रधानसम्पादकः
डॉ० एन्० आर्० कण्णन्

सम्पादकः
डॉ० रामजी पाण्डेयः



राष्ट्रिय-संस्कृत-संस्थानम्

# उपचारमाला

प्रधानसम्पादकः

डॉ० एन्० आर्० कण्णन्

सम्पादकः

डॉ० रामजी पाण्डेयः



राष्ट्रिय-संस्कृत-संस्थानम्

**Rashtriya Sanskrit Sansthanam**
(Deemed University)
Under the auspices of the Ministry of Human Resources Development
Govt. of India

**Gangānāth Jhā Campus Text Series No-79**

**General Editor**
**Dr. N. R. Kāṇṇan**
Principal, Gangā Nāth Jhā Campus, Allahabad

Mahamudgalbhattkrita
# Upcharmala

**Edited by**
**Dr. Ram Ji Pandey**
Asst. Profesor
Rashtriya Sanskrit Sansthan
(Deemed University)
Allahabad-(U.P.)




**Rashtriya Sanskrit Sansthanam**
**(Deemed University)**
**Ganganatha Jha Campus**
**Chandrashekhar Azad Park**
**Allahabad-211002**
**2018**

**Published by : Principal**
Rashtriya Sanskrit Sansthan
(Deemed University)
Ganganatha Jha Campus
Chandrashekhar Azad Park
Allahabad - 211 002 (U.P.) India



**ISBN 978-93-85791-19-2**

**First Edition : 2018**

**Price : ₹ 170/-**

Printed At :
**Akshayavata Prakashan**
26, Balrampur House
Allahabad-211002

राष्ट्रियसंस्कृतसंस्थानम्
मानवसंसाधनविकासमन्त्रालयाधीनः
मानितविश्वविद्यालयः

गङ्गानाथझापरिसरमूलग्रन्थमाला प्रसूनम् नं०-७९

प्रधानसम्पादकः
डॉ० एन्०आर्० कण्णन्
प्राचार्यः, गङ्गानाथझापरिसरः, प्रयागः

महामुद्गलभट्टकृता

# उपचारमाला

सम्पादकः
डॉ० रामजी पाण्डेयः
सहायक-आचार्य
राष्ट्रिय-संस्कृत-संस्थान
(मानित विश्वविद्यालय)
इलाहाबाद-(उ०प्र०)



राष्ट्रियसंस्कृतसंस्थानम्
( मानितविश्वविद्यालयः )
गङ्गानाथझापरिसरः
आजादोद्यानम्, प्रयागः-२११००२
२०१८

डॉ० एन्० आर्० कण्णन्
प्राचार्यः
राष्ट्रिय-संस्कृत-संस्थानम्
मानित विश्वविद्यालयः
गङ्गानाथझा-परिसरः
भारतशासनस्य-मानव-संसाधन-
विकासमन्त्रालयाधीनः

Dr. N. R. Kannan
Principal
Rashtriya Sanskrit Sansthan
Deemed University
Ganga Nath Jha Campus
Under the Ministry of Human
Resource Development, Govt. of India

# प्रधानसंपादकीयम्

अथेदानी समेषां विदुषां महतो हर्षस्य विषयः यत्किल भगवति श्रीरामचन्द्रे निरतिशयभक्तिवर्णन परं पापनिवारकं च महामुद्गलभट्ट-विरचितं उपचारमालाख्यं श्लोकात्मकमपूर्वग्रन्थरत्नम् गङ्गानाथझा-परिसरद्वारा सम्मुद्राप्य प्रकाशनेन अस्मन्नयनसुलभतामाप्नोति।

इह लोके सकलपुरुषार्थसाधनं ऐहिकामुष्मिकादिविविध-फलप्राप्तिजनकं समस्तपापनिवारकं च आदिकाव्यमिति नाम्नैव प्रसिद्धम् भगवता वाल्मीकिमहर्षिणा अनुगृहीतं रामायणमिति विश्वप्रसिद्धं चकास्ति। उक्तं च भगवता वाल्मीकिमहर्षिणा-

धर्म्यं यशस्यमायुष्यं राज्ञां च विजयावहम्
आदिकाव्यमिदं चार्षं पुरा वाल्मीकिना कृतम्
यः श्रृणोति सदा लोके नरः पापात्प्रमुच्यते
पुत्रकामश्च पुत्रान्वै धनकामो धनानि च।।
ते प्रार्थितान् वरान्सर्वान् प्राप्नुवन्तीह राघवात्।

इत्यादिभिः श्लोकैः

तदिह भगवतो रामचन्द्रस्य विषये भक्त्याद्यंशविशेषमाधारीकृत्य

प्रकृतग्रन्थकृद्भिः कविभिः अस्मिन् ग्रन्थे स्रग्धराद्यनेकवृत्तेषु प्रणीतैः श्लोकैः विद्वन्मनोहरशैल्या अपूर्वतया अनेके विषयाः वर्णितास्सन्ति। अस्य ग्रस्थस्य उपचारमालेति नाम भगवति राघवे षोडशाद्युपचारवत् उपचाररूपेण एतद्ग्रन्थसमर्पणादिति यत् कविप्रोक्तं तत् विद्वन्मनोहरं प्रतीयते। एवमस्य ग्रन्थस्य रामार्चशतकमित्यपि नामान्तरं युक्तमित्यभाणि। तथा अस्य ग्रन्थस्य लघुत्वेऽपि श्रीरामे अनिर्वचनीया निस्सीमा च भक्तिः रामचन्द्रैकध्यानपराणां हनूमत्प्रभृतिवानरपुङ्गवानां विभीषणादीनां च सविधे श्रद्धाविशेषः तेषु अनितरसाधारणगुणविशेषवर्णनपूर्विका भक्तिश्च विविधश्लोकेषु ग्रन्थकृता निरटङ्कि इति ग्रन्थस्य गाम्भीर्यं वैशिष्ट्यञ्च एतद्ग्रन्थद्रष्टृभिः सर्वैरपि विद्वद्भिः अवगन्तुं शक्यत इति नास्ति संशयलेशावसर इत्ययं ग्रन्थः सर्वलोकोपकारक इत्यस्माकमभिप्रायः।

अस्य ग्रन्थस्य संस्कृतहिन्दीभाषाभ्यां सुविशदं अर्थवर्णनमकारि संपादकेन डॉ० रामजीपाण्डेयमहोदयेन। अतः तेभ्यः धन्यवादपुरस्सरम् सर्वेश्वरः श्रीरामचन्द्रः मङ्गलानि अनुगृह्णातु इत्यर्थये।

इत्थं विद्वज्जनविधेयः
प्राचार्यः
१८.०१.२०१८ डॉ० एन्० आर्० कण्णन्

# भूमिका

महामुद्गलभट्टप्रणीतेयमुपचारमाला-अद्यावधि मातृकाग्रन्थेषु सुरक्षिता वर्तते। पण्डितमुद्गलभट्टः रामानन्दसम्प्रदायाचार्य आसीदिति तदीयभावैः अभिव्यज्यते। उपचारमाला पापानां मूलतनाशाय तापत्रयनिवारणाय च औषधिकल्पा वर्तते। उपचारमाला चिकित्साग्रन्थो वर्तते इत्यपि केषाञ्चनमतम्। वस्तुतः ग्रन्थस्यावलोकनेन स्फुटीभवति यत् अत्र भगवतः श्रीरामचन्द्रस्य आचार्यरूपेण उपचारोऽस्ति। यथा पञ्चोपचार षोडशोपचार तथैव श्रीरामचन्द्रस्य समार्चने केचन उपचारा अत्र कल्पिता दृश्यन्ते।

अस्मिन्ग्रन्थे शताधिकाः श्लोकादृश्यन्ते। रामार्चशतकमपि ग्रन्थस्यास्य नामान्तरम्। ग्रन्थारम्भे भगवन्तं श्रीरामचन्द्रं प्रणमति ग्रन्थकारः। यथा-

**मध्ये स्मरामि दिवसस्य रघुप्रवीरं**
**सध्येयमूर्त्तिममरारि निपात धीरम्।**
**वध्येऽपि यो दशमुखे व्यतरत्तदिष्टं**
**यद्ध्येकतानमतिभिर्यतिभिर्दुरापम्।।१।।**

पुनः गणेश-सूर्य-शिवपार्वती-दीपेश-क्षेत्रपालान् श्रीरामद्वारपालाञ्च नौति। शिरसः चरणपर्यन्तं बाधाया निवारणाय द्वारलक्ष्मीं देहलक्ष्मीं च प्रणमति ग्रन्थकारः। अनन्तरं श्रीरामस्य द्वारदेशे प्रवेशाय यमराजं कालिन्दीं च नमस्कुरते। पुनः गोदां, कृष्णां, भद्रां, रेवां, तापीं अन्याश्च नद्यः प्रणौति। भगवतः शार्ङ्गपिनाकाभ्यां नमोऽस्तु इति कथयति।

श्रीराघवस्य रत्नसिंहासनं स्तौति यस्य प्रकाशे रविकोटः अंगारतां याति।

लक्ष्मी, पार्वती, सरस्वतीञ्च ग्रन्थकारः प्रणम्य कथयति यज्जानकीवल्लभे

श्रीरामे तस्य–अनन्या भक्तिरस्त्विति। यथा–

मायातत्त्वं कालतत्त्वं विद्यातत्त्वं नमाम्यहम्।
जानकीवल्लभे भक्तिः सर्वदास्त्विति वाञ्छया।।२०।।

अनया उपचारमालया समस्ताः पापजालाः निरस्ता भवन्ति। अतः अस्य ग्रन्थस्य नामोपचारमालेति वर्तते। अतएव "अथोपचारमालया निरस्तपापजालया" इति उक्तिः दृश्यते।

कविर्लिखति हे रघुपते! तव पादप्रक्षालनं करोमि इति न ते उपचारः। मम पापहरणे तव कृपा भवत्विति यथोक्तम्–

यत्क्षालयामि तव पादसरोजयुग्मं
सोऽयं न ते रघुपतेऽत्र किलोपचारः।
किन्त्वस्ति हृन्मम निलीनमनन्यगामि
तत्पापपङ्कहृतये कृत एष यत्नः।।३४।।

स्रग्धराछन्दसि श्रीरामचन्द्रस्य चिन्तनमतीवरुचिकरं प्रतिभाति–

सौवर्णे मण्डपेऽस्मिन् सुरतरुणतरुच्छायसंछादितोऽधः
प्रोद्यन्मुक्तावितानेदिनकरनिकरस्फीतचञ्चद्विमाने।
क्षीरांभोराशिफेनोपममृदुलतरप्रच्छदे स्वच्छदेशे
हैमे सिंहासनेऽष्टामलदलकमले राघवं चिन्तयामि।।४७।।

मालिनीछन्दसि अनुप्रासगुम्फितश्लोके ग्रन्थकारस्य पाण्डित्यमपि– अभिव्यनक्ति–

मुकुटकटकमुद्रोदारकेयूरहारा–
ननुकृतमकरं कुण्डलालङ्कृताङ्गे।
दुरितचयविरामे बामभागस्यरामे,
सरसमहिमनो मे भक्तिरभ्येत रामे।।४९।।

वसन्त तिलकाछन्दसि अनुप्रासगुम्फितः पदविन्यास्य विदुषां चेतो ध्रुवं समाकर्षति–ग्रन्थकारः सीतां, लक्ष्मणं, शार्ङ्गं, विशिखां च प्रार्थयते यत् ते श्रीरामचन्द्रं प्रति समुपागतं मां रङ्कं निवेदयन्तु। यथा–

भक्तप्रार्थिकल्पवल्लिलतिके सीते समाकर्णय
त्वं सूर्याचयमौलिमण्डनमणे श्रीलक्ष्मणक्ष्मापते।
रे शार्ङ्गाभिध चाप किं च विशिखा यूयं प्रधानानि मे
रङ्कं मां समुपागतं कथयत श्रीरामपृथ्वीभुजे।।५२।।

हे हनूमन् त्वं श्रीरामस्य प्रियोऽसि राज्ञः सुग्रीवस्य मित्रमसि, हे भारत! त्वमस्य देवस्य भक्तो भ्रातासि, भवता प्राप्तमपि राज्यं न स्वीकृतमिति कविना वर्णितम्। विभीषणः स्वार्थं परित्यज्य श्रीरामचन्द्रस्य भक्तोऽभूत्, फलतः प्रयासं विना लङ्कायाः राज्यम् तेन लब्धम्।

ग्रन्थकारः श्रीरामस्य भ्रातरं शत्रुघ्नं, मन्त्रिवर्यं सुमन्त्रं, ब्रह्मर्षि वशिष्ठं आदिकविं वाल्मीकिं च प्रशंसापूर्वकं निवदेयति यत् ते श्री राघवेन्द्रं मम विषये कथयत्।

सनक–सनन्दन–सनत्कुमार, सनातनान् संस्तुत्य निवेदयति यत् ते पातकं शरणार्थिनं मां श्री रामस्यचरणद्वन्द्वे निक्षिपन्तु।

कविः नीलं, नलं, सुषेणं, मैन्दं, शरभं, गवाक्षं अन्यान्नपि कविपुङ्गवान् प्रणमति।

कविः भगवतः कुण्डलं, किरीटं, श्रीवत्सं, कौस्तुभं शङ्खं, चक्रं, गदां, पद्मं च अभीष्ट प्राप्तये स्तौति। ग्रन्थकारः श्री रामस्य सन्तुष्ट्यै सोमं अनिलं, नलं, प्रभासं, पीठभद्रं, शम्भुं, अहिर्बुध्न्यं, पिनाकीशं, अरुणं, वेदाङ्गं, इन्द्रं, गभस्तिं, यमं, मित्रसुतं, विष्णुं, दिवाकरं प्रणौति। ब्रह्माणं, लोकपालकम्, वज्रं, शक्तिं, गदां, शूलं, दण्डं, खड्गपाशं, कमलं चक्रं, रामपार्षदान्, नागान्, द्वारापलकान्, विभीषणं अन्यान् च देवान् प्रणमति।

श्रीरामचन्द्रः भोजनं करोति, श्रीसीता स्मितमधुरमुखी विजनं करोति। तस्य वर्णनमित्थम् स्रग्धरा छन्दसि द्रष्टव्यम्–

**सौवर्णामत्रनिष्ठामृतमयाविविधान्नान्यवाग्गोचराणि**
**प्रीत्या स्वाद्यार्थितानिप्रियाविवुधगणान् श्वासयन् पंक्तिभोक्तॄन्।**
**जानक्याबीजमानः स्मितमधुरमुखश्चिन्तनीयोऽनुरक्तै-**
**र्भुंक्ते श्रीरामचन्द्रोव्यवधिपटतटे सच्चिदानन्दसान्द्रः।।८१।।**

श्रीरामचन्द्रस्य सेवया पापानि दूरी भवन्ति। श्रीमुद्गलभट्टो लिखति–

**रे! रे! ब्रह्मवधादिपापगिरयो निःसंख्यजन्मार्जिताः,**
**श्रीरामांघ्रिपराङ्मुखं नृपधियातीतं च वेगान्विताः।**
**नो चेत्तत्प्रचुरप्रदक्षिणपरिक्षुस्मक्षितिप्रोद्भवत्-**
**भूरिक्षुद्ररजः कणाशनिकृतो नाशोऽस्तु वः शाश्वतः।।८९।।**

अनुष्टुपच्छन्दस्यपि अनुप्रासवलिना स्तुतिरद्भूता दरीदृश्यते–

**नमः समस्तसंसारधरद्विध्वंसभानवे।**
**जगदानन्दकन्दाय दशस्यन्दनसूनवे।।९६।।**

ग्रन्थकारो लिखति यत् अवाच्यवचनात् यत्पापं, अकार्यस्य करणात्, अभोज्यान्नादानात्ग्रहणात्, अगम्याभिगमनात्, अनर्थानां सङ्गात्, बुधजनविरागाच्च यत्पापं जायते तादृशानां समेषां पापनिवारणाय अहं श्रीसीतापतिं शरणमुपगतोऽस्मि–

**अवाच्योक्तेः पापं यदभवदकार्यस्य च कृते-**
**रभोज्यान्नादानादथपुनरगम्याभिगमनात् ।**
**अनर्थानां सङ्गाद्बुधजनविरागात्तदखिलम्,**
**लयं नेतुं सीतापतिमुपगतोऽस्मीह शरणम्।।९९।।**

कामः, क्रोधोलोभोऽपि एतत्त्रयं नरकस्य द्वारं गीतायामुक्तम्। ग्रन्थकारो लिखति "कामं कान्तासु जनयतु न मयि" मयि तत्पदे सेवाभावो भवतु। क्रोधो मम शत्रुः पूजारिक्त समये न्यूनकाले भवतु। लोभः तव स्मेरानन दर्शनार्थं भवतु।

ग्रन्थकारः श्रीरामं कथयति–भो राम मम चेतः तव चिन्तनासक्तं भवेत्, म चक्षुस्त्वद्दर्शने भवतु, मम वाणी तव गुणानुकीर्तने भवतु इति प्रार्थना।

श्रीरामे तथा सीतायां च ग्रन्थकारस्य अनन्या भक्तिर्दृश्यते। यथा–

शरणं रघुनाथो मे शरणं जनकात्मजा।
तावुभौ शरणं भूयो भूयासौ शरणं मम।।११२।।

ग्रन्थान्ते कविः लिखति–

इमां महामुद्गलभट्टदृष्टां
पठेद्य इष्टामुपचारमालाम्।
भवेत्तमालाङ्कुरकान्तकान्तिः
सीतापतिस्तस्य परं प्रसन्नः।।१२०।।

इत्थमत्र एतद्ग्रन्थकर्तुः कवेः अभिप्रायविशेषः एतत्काव्यं सारांश (एतद्ग्रन्थ सारांशश्च) यथाशक्ति उपापादि् गुणैक पक्षपातिनः विद्वांसः हंसक्षीरविवेक न्यायेन गुणमात्र स्वीकृत्य अस्माननु गृह्णन्तु इति विरमत्ययंजनः।

अन्ते च ग्रस्थस्यास्य एतत्परिसरद्वारा प्रकाशनाय मुद्रणादिव्यवस्थाद्वारा अस्माननुगृहीतवतां सदाचारसम्पन्नानां वेद–न्याय–मीमांसा–वेदान्तशास्त्रमर्मज्ञानां विपश्चिन्मणिः शास्त्ररत्नाकरः सर्वशास्त्रविशारदेत्यादिबिरुदभूषितानाम् राष्ट्रियसंस्कृतसंस्थानस्य कार्यवाहकत्वेन कुलपतिचराणां संप्रति एतत्परिसरे प्राचार्य पदमलंकुर्वतां डॉ० एन्० आर० कण्णन् महोदयानां सविधे आदौ भूयोभूयः धन्यवादज्ञापनपूर्वकं प्रणामाञ्जलिं समर्पयामि।

।। इतिशम् ।।

डॉ० रामजी पाण्डेयः

□□

विद्यावाचस्पति डॉ० उमा रमण झा
राष्ट्रपति सम्मानित
निदेशक

सरस्वती शोध-संस्थान
३, प्रीति विहार, सुरेन्द्र नगर, चिनहट
लखनऊ-२२७१०५ (उ०प्र०)

# प्राक्कथनम्

मुद्गलभट्टकृतेयमुपचारमाला यथोचितं व्याख्यानसहिता प्रकाश्यत इति ज्ञात्वा मोमुद्यते मे चेतः। उपचारमाला तापत्रयनिवारणाय पापानां विनाशाय अपूर्वग्रन्थरत्नं विद्यते। ग्रन्थस्यान्ते लिखिते श्लोके–

इमां महामुद्गलभट्टदृष्टां
पठेद्य इष्टामुपचारमालाम्।
भवेत्तमालाङ्कुरकान्तकान्तिः
सीतापतिस्तस्य परं प्रसन्नः।।

अत्र ग्रन्थकर्तुर्नाम महामुद्गलभट्टः वर्तते। ग्रन्थस्य नाम उपचारमालास्ति। उपचारमाला चिकित्साशास्त्रग्रन्थोऽस्ति इति केषाञ्चन मतम्। किन्तु वस्तुतः ग्रन्थोऽयं पापत्रयनिवारणाय लिखितः। ग्रन्थकारः स्वयं लिखति–

अथोपचारमालया निरस्तपापजालया।
भजे कजेक्षरं रघुप्रवीरमीरितोऽधुना।।–श्लोक ३३

महामुद्गलभट्ट इत्युक्ते विशेषधर्मादिकार्यरतः महैश्वर्यसम्पनो मुद्गलभट्ट आसीदिति ममाभिप्रायः। महामुद्गलभट्टलिखितोऽयं ग्रन्थ इत्यपि सूचना नास्ति। वस्तुतः महामुद्गलभट्टदृष्टाम् उपचारमालां पठित्वा पापानि क्षयन्ते इति उक्तं वर्तते।

ग्रन्थकारः प्रायः स्मार्त आसीत्। ग्रन्थारम्भे पञ्चदेवाः संस्तुता दृश्यन्ते विघ्नेशसूर्यभर्गाम्बादीपेशक्षेत्रपालकाः। श्रीरामद्वारपालाश्च रचयन्तु कृपां मयि। इति ग्रन्थकारस्य श्लोकः–

अत्र गणेश–सूर्य–विष्णु–पार्वती–शिवाः सम्प्रार्थिता दृश्यन्ते।

मुद्गलभट्ट प्रायः रामानन्दीय एव आसीत्। ग्रन्थारम्भे ग्रन्थान्ते च यत्र–यत्र

सर्वत्र मर्यादापुरुषोत्तमस्य श्रीराघवेन्द्रस्य स्तुतयोऽक्षिलक्ष्यीभवन्ति। ग्रन्थारम्भे यथा–

मध्ये स्मरामि दिवसस्य रघुप्रवीरं
सध्येयमूर्तिममरारिनिपातधीरम् ।
वध्येऽपि यो दशमुखे व्यतरत्तदिष्टम्
यध्द्येयकतानमतिभिर्यतिभिर्दुरापम्।।१।।

मध्ये पुनः–

भक्तप्रार्थिकल्पवल्लिललिते सीते समाकर्णय
त्वं सूर्याचयमौलिमण्डनमणे श्रीलक्ष्मणक्ष्मापते।
रे रे शार्ङ्गाभिधचाप किञ्च विशिखा यूयं प्रधानानि मे
रङ्कं मां समुपागतं कथयत श्रीरामपृथ्वीभुजे।।–श्लोक ५३

अन्ते च पुनः–

किं भक्त्या मम किं मुक्त्या किं बहूक्त्या रघूद्वह।
सर्वत्र सर्वदा ज्ञानमस्तु त्वदाश्रयम्।।–श्लोक ११७

वस्तुतः ग्रन्थकारः सर्वात्मना परब्रह्मणि श्रीरामे सर्वतोभावेनसमर्पित आसीदिति दृष्ट्या नूनमेव स राघवस्य परमभक्त आसीत्।

अस्मिन् श्रीरामार्याशतके रामशतके वा गङ्गायमुनाकृष्णारेवातुङ्गभद्रनदीनां, श्रीपवनपुत्र–सुग्रीव–नल–नीलादिभक्तानां, सेवकानां, दिग्वदेवतानां, श्रीसीतादेव्याश्च स्तुतयः सन्ति। श्रीरामचन्द्रस्य तु सर्वत्रैव यत्र तत्र सर्वत्र स्तुतिः दृश्यते।

वैयाकरणेन श्रीरामजी पाण्डेय महोदयेन ग्रन्थस्यास्य संस्कृतव्याख्यानसहितं हिन्दी व्याख्यानं सम्पादनमपि अकारि। तस्य रक्षां श्रीरामचन्द्रः करिष्यत्येवेति शम्।

दिनांक २८.०२.२०१५ उमारमणम झा शर्मणा



# आत्मनिवेदन

आपरितोषाद्विदुषां न साधुमन्ये प्रयोगविज्ञानम्।
बलवदपि शिक्षितानामात्मन्यप्रत्ययञ्चेतः।।

कालिदास रचित इस श्लोक का आशय स्पष्ट करने की आवश्यकता नहीं है। यह सत्य ही है कि मैं जिस स्तर पर अध्ययन–अध्यापन करता रहा हूँ उस स्तर पर कभी सोचा नहीं था कि सम्पादन जैसा दुरूह कार्य भी कभी करना पड़ सकता है। अपने पदानुरूप आवश्यकतानुसार कभी कुछ लिखा हो तो बात अलग है। फिर भी यथासम्भव जो प्रयास है वह आपके सम्मुख है।

प्रस्तुत महामुद्गलभट्ट विरचित ''उपचारमाला'' नामक ग्रन्थ कलेवर की दृष्टि से लघुकाय ग्रन्थ है। यह पूर्णतया भक्तिरस से ओतप्रोत है। इसमें भक्त–कवि काव्यस्तुति सामग्री से ही अपने आराध्य भगवान् राम की अर्चना करता है।

इसमें पाण्डुलिपिकार के अनुसार १२१ श्लोक हैं परन्तु एक श्लोक की पुनरावृत्ति होने के कारण १२० श्लोक ही संग्रहित है। इसमें लगभग अनुष्टुप् छन्द सहित स्रग्धरा छन्द तक प्रायः सभी प्रचलित छन्दों का प्रयोग किया गया है।

१० पृष्ठों के पाण्डुलिपि के एक–एक पृष्ठ में लगभग १४ से १७ श्लोक हैं। विशेषज्ञों के अनुसार इस लघुकाय ग्रन्थ को काव्य के अन्तर्गत स्वीकार किया गया है और उसे रामस्तुति परक काव्य कहा गया है। दस पन्नों के इस काव्य का आकार २२ × ९ सेमी० है। यह पूर्णता की स्थिति में है। इसकी संग्रहालय के अनुसार पुस्तक १८६९ है और अधिगम संख्या ४७७०१ है। इसके एक तरफ पंक्ति संख्या १० है और अक्षर संख्या ३५ से ३८ तक है।

इस लघु काव्य में बहुत से अप्रसिद्ध शब्दों का प्रयोग हुआ है जो लौकिक व्याकरण की दृष्टि से अशुद्ध कहे जा सकते हैं। इसके साथ ही बीच-बीच में कहीं-कहीं पर अस्पष्ट शब्द भी दृष्टिगोचर होते हैं जिसके कारण अर्थविसंगति की भी सम्भावना थी। अतः अर्थ संगति हेतु शब्दान्तर भी करना पड़ा किन्तु भाव को तिरोहित न होने देने का पूर्ण प्रयास मैंने किया है।

इस पाण्डुलिपि की शुद्धता और अर्थ संगति के साथ-साथ संस्कृत व्याख्या एवं हिन्दी भावानुवाद करना सम्पादन का मुख्य लक्ष्य है। मेरी जानकारी के अनुसार इसकी अन्य कोई प्रति कहीं उपलब्ध नहीं है। अत एव पाठान्तर के स्थान पर अर्थ संगति के साथ शब्द परिवर्तन अवश्य किया गया है। जहाँ कहीं भी वर्ण परिवर्तन अथवा शब्द परिवर्तन किया गया है टिप्पणी में अर्थात् श्लोक के अन्त में उसका सङ्केत किया गया है।

## कृतज्ञता ज्ञापन

इस ग्रन्थ के प्रकाशन का श्रेय वेद एवं षड्दर्शन के मूर्द्धन्य विद्वान् कुलपतिचर वर्तमान में इस परिसर के प्राचार्य पद को सुशोभित कर रहे आदरणीय डॉ० एन्०आर० कण्णन् महोदय को है, जिन्होंने इस कार्य में व्यक्तिगत रुचि लेकर प्रकाशन हेतु कार्यालयीय व्यवस्था एवं आदेश प्रदान की। अत एव उनका आजीवन अधमर्णता स्वीकार करता हूँ।

प्रायः साठ-पैंसठ प्रतिशत कार्य हो जाने के पश्चात् अकस्मात् एक बार राष्ट्रपति सम्मानित आदरणीय गुरुतुल्य डॉ० उमारमण झा जी का प्रयाग आगमन हुआ और वार्तालाप के मध्य में ही मेरे द्वारा किये गये कार्य पर दृष्टिपात किया और साथ ही कार्य को सराहते हुए उन्होंने मेरा उत्साहवर्द्धन किया एवं प्राक्कथन लिखने की सहमति दी। मैं उनकी इस कृपा के लिए कृतज्ञ एवं अधमर्ण हूँ।

इसके अतिरिक्त आचार्य प्राचार्य (का०) प्रो० सर्वनारायण झा जी का

धन्यवाद करता हूँ जिन्होंने इस कार्य को करने की सत्प्रेरणा दी। मैं प्रो० शैलकुमारी मिश्र जी का भी आभारी हूँ जिन्होंने मेरे कार्य को देखकर मेरी त्रुटियों के तरफ ध्यान दिलाया जिसके आधार पर मैंने पुनरीक्षण किया और त्रुटियों को दूर करने का प्रयास किया। इनके अतिरिक्त प्रो० ललित कुमार त्रिपाठी जी का धन्यवाद करता हूँ जिन्होंने इस कार्य में परोक्ष अथवा प्रत्यक्ष रूप से सहयोग किया है। डॉ० बीना मिश्रा जी का धन्यवाद करता हूँ जिनके सहयोग के बिना यह कार्य सम्भव ही नहीं था इसके साथ ही इनके अतिरिक्त अन्य सभी को धन्यवाद देता हूँ जो इस कार्य के लिए प्रत्यक्ष या परोक्ष रूप में सहभागी हैं। आवश्यकतानुसार प्रो० विश्वम्भरनाथ गिरि जी से भी समय-समय पर सहयोग लेता रहा, इसके लिए उनका आभारी हूँ, अधमर्णत्व स्वीकार करता हूँ और आशा करता हूँ कि भविष्य में भी सहयोग करते रहेंगे। इसके साथ ही संग्रहालय के अधिकृत अधिकारी के रूप में श्री शैलेन्द्र पाण्डेय का इस हस्तलेख के आलोडन में पर्याप्त सहयोग रहा। अतः उनको भी धन्यवाद देना और आशीः देना मेरा कर्त्तव्य बन जाता है जिससे यह कार्य पूर्णता की ओर अग्रसर हुआ।

अन्त में मैं अक्षयवट प्रकाशन, इलाहाबाद के प्रकाशक महोदय को धन्यवाद देता हूँ जिनके सहयोग के बिना किसी के भी दृष्टिपथ में यह सारस्वत कार्य-आना सम्भव नहीं था। अतः त्रुटियों हेतु क्षमा याचना सहित सुधी जनों के कर-कमलों में यह प्रथम प्रयास समर्पित करता हूँ।

**राष्ट्रिय-संस्कृत-संस्थान**
**( मानित विश्वविद्यालय )**
**गङ्गानाथ झा परिसर इलाहाबाद**

**विदुषाञ्चरणचञ्चरीकः**
**रामजी पाण्डेय**
**सहायक आचार्य ( व्याकरण )**



।। श्री ।।

श्री सीतारामाभ्यां नमः

ॐ श्रीं श्रीं श्रीं स्तौमि त्वाऽहं मम खलु रसनां मा कदाचित्त्यज त्वं
माम मे बुद्धिर्विरुद्धा भवतु मम मनः पातु मां देवि! पापात्।।
मा मे दुःखं कदाचित् क्वचिदपि विषये पुस्तके नाकुलत्वं
शास्त्रे वादे कवित्वे प्रसरतु मम धीर्माऽस्तु कुण्ठा कदाऽपि।।

–श्री सिद्धसरस्वतीस्तोत्रम्

ॐ प्रवर्त्तकोऽसि बुद्धीनां यदि राम त्वमेव मे।
ततस्त्वदाज्ञावशगं दुर्बुद्धिमपि मामव।।

–उपचारमाला

श्रीगणेशाय नमः ॥ श्रीरामाय नमः ॥ मध्ये स्मरामि दिवसस्य रघुप्रवीरं सध्येयमूर्त्तिम
१ मरारिनिपातधीरं ॥ वध्येपियोरशमुखेव्यतरत्तदिष्टंय ह्येकतानमतिभिर्यैनिषेदुरा
पं ॥१॥ विघ्नेशसूर्यभर्गांबादीपेशक्षेत्रपालकाः ॥ श्रीरामद्वारपालश्च रक्षंतुद्धपाम
यि ॥२॥ द्वारलक्ष्मीं देहलीं च प्रणम्य प्रार्थयेन्वहं ॥ धिरस्थ्युरणबाधामेप्रवेशेभास्तुमेय
तः ॥३॥ भ्रातर्विधातर्नेनुजह्नुकन्येकालिंदिमान्येकलयास्मदुक्तिं ॥ प्राग्द्वारदेशे रघु
नायकस्य निरंकुशं मे भवतु प्रचारः ॥४॥ भद्रं सुभद्रं प्रणमामि गोदां कल्लोसन्नक्ष्मार
घुनाथपत्न्येय ॥ तद्दक्षिणद्वारि मम प्रवेशो निरंकुशः स्यादिति चित्तवृत्त्या ॥५॥ जलेशगादिद्वारक्षि १
ताधिकारं चंडप्रचंडं प्रणमामि रेवा ॥ नापीं च सैवां रघुनायकस्य वांछानि दीक्षानि हनांतरायां ॥६॥

वक्षा

वेदिकायां प्रतिष्ठितं ॥१५॥ रत्नसिंहासनं नौमि राघवस्य महीपतेः ॥ निर्वाणं गारत्नां यांति
२ यस्याग्रे रविकोटयः ॥१६॥ धर्मज्ञानवैराग्यैश्वर्यैर्दि कोणगाः ॥ भयं स्यजंतु दुष्टानां
क्रमोद्भूषवशीकृतो ॥१७॥ विरोधिनः स्वस्य चतुर्षु पीठगात्रेषु पूर्वादिषु राघवेण ॥ निवेशि
तावासनया कृयंति पूयेन यूयं किल कोणलीनाः ॥१८॥ मध्येनंतं कंदनाले सरोजं पत्रा
ण्यादयां च सरैः कर्णिकां च ॥ स्मारे स्मारं राघवाधारसुद्धेर्द्रक्षाम्यक्ष्मास्थीयसंसारपारं
॥१९॥ अर्कानलनिशानाथमंडलोपर्यवस्थितं ॥ अन्योन्याश्रयतां प्राप्तं गुणत्रयमिहाश्रये ॥२०॥
मायातत्त्वं कालतत्त्वं विद्यातत्त्वं नमाम्यहं ॥ जीवतत्त्वं प्रकृतिः सर्वदा त्रित्वं छया ॥२१॥ आत्मा
नमंतरात्मानं परमात्मानमेव च ॥ ज्ञानात्मानं प्रार्थये हं श्रीरामे भक्तिरस्तु मे ॥ २२॥ श्रीरामासने २
दृष्ट पद्मप्राक्पद्मनिष्ठां कृतांजलिः ॥ विमलां प्रार्थये देवीं विमलं कुरु मामिति ॥२३॥ कौसल्यासनां

अत्कैश्चंपकमल्लिकापरिमलैस्तैलैरथोद्वर्त्तितं कस्तूरीघनसारकुंकुमरजःपंकैरनंकप्र
भां। चंद्रश्चंदनकल्कसारितशिरस्तैलं कवोष्णैर्जलैः। स्नातं कांतमहं विदेहदुहितुः स्वां
तेनितांतं श्रये॥४०॥ भूयाम्यन्नरभः स्वच्छश्चारदभ्रसमाभवस्त्रप्रोक्षारितस्तपनवारिल
वांगयष्टिं। स्वर्षोज्झितं विरुचिचंद्रमसं घसांध्यरागांबराभमहमीष्वरमाश्रितोस्मि
॥४१॥ कटितटपरिहितपट्टपरवर्णोनिर्गीर्णप्रपंसोवर्णी। कटिसूत्रं च किंनटद्रणाविलोल
यंतं फजेरघूत्तंसं॥४२॥ स्वांसांसांगिनितसकांचननिष्कोगण्यनरोम्रहुरोः किंचिन्नाल
द्विरीषपुष्पमृदुलेप्रावारपीनांबरे। स्पृष्टेऽनुमनुजानकीभुजलतेसांद्रत्स्यतपस्पतश्चि
तमेरुमसुदेसमाधमधुरस्मेराननो राघवः॥४३॥ एतं निद्रायपथद्वाणामनश्वांगगनप्र
स्ते। श्रीरामवपुषि ध्यायेद्दुहस्सूत्रं नदुज्ज्वलं॥४४॥ हांतेकांतेपादुके राघवांघ्रिद्वंद्वे न्याधः संगमे

यसाभ्रवे ॥ धन्यंमन्ये तं नथाप्य तदंते पुण्योदंतोदंते नंदांतहस्तु ॥ ४५ ॥ पर्यस्त कुंतलगलज्जलबिं
४ दुमिंदुत्वज्ञावहास्यमणुमक्तोसभावहास्यं ॥ दास्यं गतो हृदिदृगास्य पुंव्रजं तं सिंहासनाधिसु
स्वामीऽयमहं स्मरामि ॥ ४६ ॥ बलीयसाद्देवपदावधारयस्वंधामपद्मामनवद्यसंश्रयं ॥ निजासनं
कांचनसिंहसुंदरं परंतडित्वान्निवमेरुचेोरवरं ॥ ४७ ॥ सौवर्णे मंडपेऽस्मिन् सुरतरुण तरुछायसं
छादितेऽधःप्राघन्मुक्ता वितानेदिन करनिकरस्फीतचंचद्विमाने ॥ क्षीरांभोराशिफेनोपममृदु
लतर [illegible] दे स्वच्छदेशे हैमेऽसिंहासने श्रामस्तरलकमलेराघवं चिंतयामि ॥ ४८ ॥ भक्तोसि
क्तकुंकुमैः सुपोपाचासत्तेव्यक्तोचाभितंभतुरग्ने ॥ तत्सौंदर्याविष्टदृष्टिः प्रयाताप्यतास्सर्वेस्तंब
लिंकल्पयंतु ॥ ४९ ॥ मुकुटकटकमुद्रोदार केयूरहारान् कनकमकरवलाकुंडलालंकृतांग ॥ ४
दुरितचयविरामे वामभागस्थरामे सरससिद्धमनोमेप्राक्तिमप्येतुरामे ॥ ५० ॥ कर्पूरकुंकुमर

ॐमृगनाभिमिश्रश्रीखंडकल्पितविशेषककांतभालं॥ रम्यांगरागमनुजत्रयवीज्यमानं चेत
श्चिरंतमनुचिंतय रामचंद्रं॥५१॥ सतुलसीदलकोमलमंजरीबकुलपाटलिकेतकमल्लिकाः॥
सुरभिधूपसुधूपितराघवालकभरे निहिताः सुखयंतु मां॥५२॥ भक्तप्रार्थितकल्पवल्लिललिते
सीतिसमाकर्षपित्वं सूर्पान्वयमौलिमंडनमणे श्रीलक्ष्मणाग्रजापते॥ रेशार्ङ्गिन्धिधन्वा किंचविज्ञा
स्वापूर्यंप्रधानगनिमेरं कंमांससुपागतं कथयतश्रीरामपृथ्वीभुजे॥५३॥ इतिप्रधानं ॥फर
सागररसदिनकरभुवन[illegible]मितपालसंमितस्वरयुक्॥ दहनोदहतुसबिंदुर्दुरितं श्रीरामः ब
द्धमा॥५४॥ [illegible]ं जाग्रन्निद्रे सदयांतरामनन्दैविप्रान्नि[illegible]परमात्मसंज्ञे॥ विदेऽन[illegible]घहा
नमयांबुजाक्षन्तरंगं तेमनोमेन यरामचंद्रं॥५५॥ इति द्वितीयं श्रीवासुदेवाय नमः श्रियै
नसंकर्षणायाथनमोस्तुकर्णास्ये॥ प्रद्युम्नसप्रीतिकसानिरुद्ध रतेमतिंमे कुरु रामचंद्र॥५६॥ इति

तृतीयं प्रियं सखिदं वस्य परं हनूमन् सुग्रीवमित्रं त्वमपीश्वरस्य ॥ भ्रातासि मे कोऽभरत त्वमस्य येनोऽपि

तं प्रागमपीह राज्यं ॥५७॥ विभीषण स्वार्थमतिं जहीहि हैमं पुरं प्राप्य विना प्रयासं ॥ वदान्य मे नैसमु

पाश्रितस्त्वं कुरु सत्र कार्याणि जनस्य शश्वत् ॥५८॥ फणागण छत्र धराहिनाथ त्वमस्य देवस्य किलानु

जोऽसि ॥ तुल्यं ददावंगद यौवराज्यं राजा रघूणां तिलकः किलायं ॥५९॥ शत्रुघ्न त्वं ननु रघुपतेः प्राण

तुल्योऽसि बंधुस्त्वमृक्षाणामधिपस्सनतं सेवको राघवस्य ॥ याचे किंचित् कृतकरपुटस्तेन भावेन

युष्मान् सर्वे यूयं रचयत मयि प्रीतिमीशानुरक्ताः ॥६०॥ चतुर्थं सृष्टे जयंत विजयाभिध मंत्रि वर्य

सौराष्ट्र राष्ट्र परिवर्द्धन सत्यकोप ॥ त्वं धर्मपाल मम वाचमिमां सुमंत्र शृण्वेतु कोसलपतिं नृप

मानयंतु ॥६१॥ पंचमं वसिष्ठ शिष्टो रघुनाथकृत्यपन्न दान्नुभावो केवरकरः पुरोधाः ॥ गर्भस्थि

तोऽपीश्वर तत्त्वनिष्ठ त्वं वामदेव श्रितराम देवः ॥६२॥ जाबालि गोपाल विशाल शील आवाल

संभवक्त्रपरिपालपणां रघुपतिः शरणागतवत्सलः॥७९॥ देवत्वं जय राम राघव जय श्रीसूर्य
वंशोदयपायः पालय पालय त्रिभुवनं स्वामिन्नमायप्रभो॥ इत्थं प्रार्थनवाक्यपरैः सुरवरैः सद्भ्न
रैः किंनरैर्धूपप्रोद्धूद्धवधूमभोगसमये रामः स्फुतः पातु मां॥८०॥ दिक्क्रांतभ्रांतभेरीमुरजमुख
महावाद्यमाद्यन्निनादैः कर्पूरानर्घ्यरत्नामलहृदयमहः संघनीराज्यमानः॥ उच्चार्यौ नार्यमुष्टी
श्चिकुरभरपरिक्षिप्तपीताम्बरो मे चेतो रामे सरामे निवसतु सततं स्मेरवक्त्रारविंदे॥८१॥ सौव
र्णामत्रनिष्ठामृतमय विविधान्नान्यथवा भोगराशिं पीसास्वाद्यार्थितानि प्रियविलुयगण
श्चारायन्नुपंक्तिभ्यो कृन्न॥ जानकीयावीज्यमानः स्मितमधुरमुखश्चिंतनीयो नु रक्तैर्भुक्त्वा श्री
रामचंद्रो व्यवधिपटतटे सच्चिदानंदसांद्रः॥८२॥ प्रीतं सुगंधिमधुरं प्रणयिप्रणीतं पीतं जलं
रघुवरेण मुहुर्मुहुर्यत्॥ नीतं सम्नूलकमघांकुरसंगजालं वीतं पुनः समुदयेन तुतेन दाढः॥८३॥

गानिर्भे

कामेनापिक्षिप्तमेतत्तवांघ्रिद्वंद्वे चित्तं मा पुनः [illegible] यौल कामं॥ वांछन्ने तद्गुणोर्यां किंवादे
वाधीश स्वाधं लब्धं॥८॥ सकामेन नाथ वाराम निष्कामेन मयार्पितं॥ त्वयि चित्तं पुनर्भूयो हि ज्ञेयं त
रसमुखं॥९॥ त्वं न स्वच्छिन्न नास कंचवक्त्र स्वस्तिमार्थे [illegible] नां॥ वाकू त्वदीयं गुणौ ब्रिङ्गजानकी वल्ल
भास्कम॥ काली वा पंशुमाली वा कपाली वा गजाननः॥१०॥ मयि संमुखतां याते श्रीराम त्वं प्रप
घने॥११॥ ध्यायतस्तव तद्रूपं न मनस्त्वत्पदद्वयं॥ वदनस्य च नामानि यांतु राम दिनानि मे॥१२॥
शरणं रघुनाथो मे शरणं जनकात्मजा॥ तावुभौ शरणं भूयो भयांसे तारकं मम॥१३॥ अप
राधसहस्राणां सहस्रमयुतं तथा॥ क्षंतुमर्हसि नस्सर्वे दासस्येव गृह्णाण मां॥१४॥ मनुबीजजननी
यद्वत्क्षमते बालदुर्नयं॥ जगज्जनानि राम त्वं क्षमस्वाविनयं मम॥१५॥ त्वं नो भ्रात्रा पिता माता भ्रा ९
ता पत्नी सुहृत्तथा॥ धनं धर्मोपि रा स्तोषस्त्वत्तो न्यन्नास्ति मे प्रियं॥१६॥ किं मन्त्यामि किं मुना

।। श्री गणेशाय नमः ।।

मध्येस्मरामि दिवसस्य रघुप्रवीरं-
सध्येयमूर्त्तिममरारि निपातधीर[१]म्।
वध्ये[२]ऽपि योदशमुखे ब्यतरत्तदिष्टं-
यद्ध्येकतानमतिभिर्यतिभिर्दुराप[३]म्।।१।।

व्याख्या–(अहं) दिवसस्य मध्ये मध्याह्न काले सध्येयमूर्तिं-अमररारिनिपातधीरं रघुप्रवीरं स्मरामि। यः वध्येऽपि दशमुखे तत् इष्टं मुक्तिं व्यतरत् हि एकाग्रचित्तैः यतिभिः मुनिभिरपि दुरापं-(अस्ति)। दशमुखः = रावणः, मध्ये = मध्याह्नकाले, सध्येयमूर्त्तिम् = ध्यानयोग्यमूर्त्तिम्, अमरारिः = देवानां शत्रुः रावणः, निपातधीरम् = हननेप्रवीणम्, दुः+आपम् = दुरापम् अर्थात् दुष्प्रापम्, यतिभिः योगिभिः = संन्यासिवद्भिरित्यर्थः।।१।।

भावानुवाद–मैं दिवस के मध्यकाल में स्मरणीय स्वरूप देवशत्रु-दानवों के संहारक रघुप्रवीर भगवान् राम का स्मरण करता हूँ जिन्होंने वध योग्य शत्रु रावण को भी एकाग्रचित्त मुनियों द्वारा भी दुष्प्राप्य इष्ट श्रेष्ठपद (बैकुण्ठ) प्रदान किया ।।१।।

[४]विघ्नेश-सूर्य-भर्ग-अम्बा-दीपेशक्षेत्रपालकाः।
श्री रामद्वारपालाश्च रचयन्तु कृपां मयि।।२।।

---

१. (रं ।।) मूले।
२. (ध्येपि) मूले।
३. (पं ।।) मूले।
४. मूलेतु– विघ्नेशसूर्यभर्गांबॉदीपेशक्षेत्रपालकाः।
श्रीरामद्वारपालाश्चर च यंतु कृपांमपि।।२।।

**व्याख्या**–विघ्नेशः = गणेशः, सूर्यः = आदित्यः, भर्गः = शम्भुः, अम्बा–पार्वती = अम्बा–माता, दीपेशः = रविः, चन्द्रो वा इति पञ्चदेवता = विष्णुः रघुकुलदीपकः रामः, क्षेत्रपालकाः = क्षेत्राणां पालकाः संरक्षकाः, श्री रामद्वारपालाश्च = श्री रामद्वारपालाः जयविजयादयः, श्रीहनूमान् "राम दुआरे तुम रखवारे" आदि, कृपांरचयन्तु = कृपां कुर्वन्त्विति मयि मत्स्वरूपे दासे।।२।।

**भावानुवाद**–श्री गणेश, सूर्य, भगवान् शङ्कर, माता पार्वती, दीप अधिष्ठात्री देवता (अथवा पञ्च देवता) तथा समस्त क्षेत्रपाल गण मेरे ऊपर कृपा करें (जिससे) प्रभु राम की कृपा मुझ पर बनी रहे।।२।।

**द्वारलक्ष्मीं देहलीं च प्रणम्य प्रार्थयेन्वह[1]म्।**
**शिरश्चरणबाधा मे प्रवेशे मास्तु मे यतः।।३।।**

**व्याख्या**–अहं–नु+अहं = न्वहं, द्वारलक्ष्मीं, देवालयस्य देहली अपि प्रणम्या भवति अतएव तां प्रणम्य प्रार्थये = प्रार्थनां करोमि (यत्) मे = मम शिरश्चरणबाधा अर्थात् शिरसः चरणपर्यन्तं सर्वा वाधा मा+अस्तु = मास्तु = मा भवतु–येन प्रकारेण राम मन्दिरे मम प्रवेशो भवेदिति।।३।।

**भावानुवाद**–मैं द्वार पर विराजमान देवी लक्ष्मी को एवं (देवी तुल्या) देहली को प्रणाम करके प्रार्थना करता हूँ कि (भगवान् राम के धाम में) प्रवेश के अवसर पर शिर से लेकर पैर तक कहीं भी कोई भी बाधा पीड़ित न करे।।३।।

**भ्रातर्विधातर्ननु जन्हुकन्ये**
**कालिंदिमान्येकलयास्मदुक्ति[2]म् ।**
**प्राग्द्वारदेशे रघुनायकस्य**
**निरङ्कुशो मे भवतु प्रचारः।।४।।**

---

१. (हं ।।) मूले।
२. (क्तिं ।।) मूले।

**व्याख्या**–(हे) भ्रातः विधाता! विधाता = ब्रह्मा जह्नुकन्ये, जह्नुकन्या–गङ्गा, जाह्नवी मान्ये कालिंदी–यमुना ननु अस्मत् – उक्तिं कलय यत् रघूणां नायकः रघुपतिः प्राग्द्वारदेशे मे मम निरंकुशः–अंकुशरहितः प्रचारः–प्रवेशः भवति–इति।।४।।

**भावानुवाद**–हे तात ब्रह्मा माता गङ्गे एवं पूज्या कालिन्दी अथवा यमुने मेरी प्रार्थना सुनकर मुझ पर कृपा करें ताकि प्रभु राम के द्वार तक मेरा निर्वाध प्रवेश हो सके।।४।।

**भद्रंसुभद्रं प्रणमामि गोदां**
**कृष्णां सतृष्णोरघुनाथ भक्त्यै।**
**तद्दक्षिणद्वारि मम प्रवेशो-**
**निरंकुशः स्यादिति चित्तवृत्त्या।।५।।**

**व्याख्या**–रघुनाथभक्त्यै सतृष्णः (अहं) तद्दक्षिणद्वारि मम एतत् द्वारदेशे निरङ्कुशः निर्वाधः प्रवेशः स्यादिति चित्तवृत्त्या सुभद्रं भद्रं, गोदां, कृष्णां भद्रानदीम् तुङ्गभद्रानदीं गोदावरीम् कृष्णा नदीम्, एताः नद्यः दक्षिणे वहन्ति अत एव आसाम् प्रणमामि।।५।।

**भावानुवाद**–श्री रघुनाथ जी की भक्ति से (विह्वल होकर धाम को प्राप्त करने हेतु व्याकुल मैं श्रीरघुनाथ के धाम के) दक्षिण द्वार में निर्विघ्न प्रवेश पाने की (अभिलाषा से) दक्षिण की नदियों में श्रेष्ठ कल्याणकारिणी तुङ्गभद्रा, गोदावरी तथा कृष्णा को प्रणाम करता हूँ।।५।।

**जलेशदिग्द्वारकृताधिकारं-**
**चंडंप्रचंडं प्रणमामि रेवा[1]म्।**

---

१. (वां ।।) इति मूले।

तापीं च सेवां रघुनायकस्य
वांछा[1]मि दीक्षा निहतान्तराया[2]म्।।६।।

**व्याख्या**–जलेशः वरुणः दिग्द्वारस्य संरक्षकः तद्वारकृताधिकारं चण्डं प्रचण्डं–द्वारपालौ (तथात्र) रेवाम्–रेखा तु नर्मदा सोमोद्भवा, तापीं च प्रणमामि एवं च राममन्त्रेण दीक्षितो भूत्वा रघुनायकस्य–रघुनाथस्य सेवां वांछामि–इच्छामीति।।६।।

**भावानुवाद**–वरुण की दिशा अर्थात् पश्चिमी द्वार के द्वारपाल चण्ड और प्रचण्ड के अधिकार में है उनको प्रणाम करता हूँ साथ ही रेवा और तापी नदी को भी (प्रणाम करते हुए) अन्तर मन से राम मन्त्र से दीक्षित होकर प्रभु राम की सेवा करना चाहता हूँ।।६।।

[3]शंखनिधे! पद्मनिधे! सरिद्वरे! वाणि! निर्मलेवैन्ये!।
क्षणदाशयाविशंतं सुखिनं श्री राममंदिरे कुरु माम्।।७।।

**व्याख्या**–हे शङ्खनिधे! हे समुद्र! हे पद्मनिधे! हे पद्माख्ये! हे सरिद्वरे! हे गङ्गे! हे वाणि–सरस्वतिं! हे निर्मले वैन्ये–पृथिविम् क्षणदासयां श्री रामंदिरे श्रीसीतातयासहितः रामः तस्य मन्दिरे आलये आविशन्तं–प्रविशन्तम् मां सुखिनं–प्रसन्नम् कुरु। श्री रामगृहं प्राप्य परमातृप्तिः कैवल्यं वा आप्यते अथवा "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति गीता–इति।।७।।

**भावानुवाद**–हे समुद्र, हे कमल के खजाने वाली गङ्गा, हे सरस्वती, हे

---

१. (छमि) इति मूले पाठः।
२. (यां ।।) इति मूले पाठः।
३. मूलेतु– शङ्खनिधेपद्मनिधेसरिद्वरेवाणिनिर्मलेवैन्ये।
क्षनदाशयाविशंतं सुखिनं श्रीराममंदिरे कुरु मां।।७।।

निर्मल पृथिवी सुख की आकांक्षा से राम मन्दिर में प्रवेश करते हुए मुझे सुखानुभूति प्रदान करो।।७।।

गृहेशाय गृहायाथ कुलदेव्यै सदानमः।
श्री रामचरणद्वंद्वे भक्तिमुत्पादयंतु मे।।८।।

**व्याख्या**–अथ गृहेशाय–गृहदेवतायै, तस्मै गृहाय शरणाय कुलदेव्यै (च) कुलदेवतायै सदा सर्वदा नम (अस्तु)। श्री रामचरणद्वंद्वे–श्री रामचरणद्वये मे–मम भक्तिमुत्पादयन्तु–ते देवाः मयि भक्तिं उत्पादयन्तु प्रापयन्तु।।८।।

**भावानुवाद**–इसके बाद गृहदेवता, गृह और कुलदेवता को सदा नमस्कार (करते हुए उनसे प्रार्थना करता हूँ) कि भगवान श्री राम के चरणयुगल में मेरी भक्ति उत्पन्न करें।।८।।

नमः शा[1]र्ङ्गपिनाकाभ्यां सशराभ्यां समन्ततः।
त्रायेतामस्त्रतां यातौ तौ रामाराधनेषु माम्[2]।।९।।

**व्याख्या**–सशराभ्यां शार्ङ्गपिनाकाभ्यां–शार्ङ्गः धनुषः पिनाकः शिवधनुषः (नमः) अस्तु। अस्त्रतां यातौ इमौ रामाराधनेषु–रामाराधनकर्मसु मां समन्ततः त्रायेताम्–रक्षतामिति।।९।।

**भावानुवाद**–बाणयुक्त शार्ङ्ग एवं पिनाक (वैष्णव एवं शैव धनुष) को मैं नमस्कार करता हूँ। ये दिव्यास्त्र भगवान् राम आराधना में रत मेरी हर प्रकार से रक्षा करें।।९।।

फणीशविद्यापीठाथ वास्तुदेव! नमोऽस्तु वः।
श्री राममंदिरांतस्थं मां रक्षंत्वस्य [3]किङ्करम्।।१०।।

---

१. (शार्ङ) मूले।
२. (मां) मूले।
३. (किंकरं) मूले।

**व्याख्या**–(हे) फणीशविद्यापीठ! फणीशः सर्पराजः (हे) वास्तुदेव! गृहदेवता वः युस्माकम् नमः अस्तु। (यूयं) श्री राममन्दिरान्तस्थं श्री रामस्य आलयस्थं शरणापन्नम् अस्य-किंकरं-किंकराः-दासाः, मां रक्षन्तु-इति।।१०।।

**भावानुवाद**–हे पतञ्जलिविद्यापीठ एवं वास्तुदेव आप सभी को नमस्कार है। आप सभी श्री राम मन्दिर में आश्रय लेनेवाले इस तुच्छ सेवक की रक्षा करें।।।१०।।

**श्री रामद्वारपालानामेषांवर्गे वशीकृते।**
**कोवा[१]ऽपसारयेन्मां यो रंकमप्यपरो बहिः।।११।।**

**व्याख्या**–श्री रामद्वारपालानाम् रक्षकाणाम् वर्गे-समूहे वशीकृते अनुकूलकृते सति मां कः वा अपसारयेत् बाधयेत् यः अपरोऽपि रङ्कः-भिक्षुः मां बहिः न अपसारयेत् वहिः करिष्यति अर्थात् रामदर्शनं भविष्यत्येव।

अस्य श्लोकस्य मूले पुनरावृत्तिरस्ति।।११।।

**भावानुवाद**–श्री राम के द्वारपालकों का समूह यदि अनुकूल है तो मुझे (श्री राम के दर्शनों से) कौन बाधित कर सकता है। जो कि एक दरिद्र को भी बाहर नहीं करते।।११।।

**बिलेबत व्यालमयान्निलीनाः[२]**
**वसंतिभेकाः कतिवा न भूमौ।**
**कालाग्निरुद्राश्रयणे[३]त्वदन्यो-**
**मण्डूकमान्यो रघुनाथपीठे।।१२।।**

---

(यह श्लोक मूलपाठ में पुनरावर्तन हुआ है, अतः इसके आगे एक श्लोक संख्या में अवनति होगी)

१. (कोवापसारयेन्मां) मूले।

१. (लीनावसंति) मूले।

२. (-श्रयनत्वदन्यो) मूले।

**व्याख्या**–बिलेबत–बिलान्तर्गताः (भेकाः) व्यालभयात् सर्पभीतेः भूयांसः भेकाः निलीनाः मण्डूकाः भूमौ पृथिव्यां निवसन्ति अर्थात् रहसि एकान्ते वसंति। कालाग्नि रुद्राश्रयणे सति त्वदन्यो मण्डूकमान्यः रघुवंश पीठे वर्तते। तस्य नास्ति भीतिः।।१२।।

**भावानुवाद**–(जिस प्रकार) बिल के अन्दर रहने वाले ब्याल अर्थात् सर्प के डर से छिपकर बहुत से मेढक धरती के अन्दर रहते हैं (उसी प्रकार) श्री राम के मन्दिर में तुमसे इतर (लोग) जो मेढक के समान हैं तुम्हारे भयङ्कर प्रलयाग्नि के डर से धरती में छिपे रहते हैं।।१२।।

**कूर्ममाधारशक्ति[१]ञ्च प्रार्थये विहिता[२]ञ्जलिः।**
**श्री रामपीठमध्ये मे चित्तमस्त्ववि[३]शङ्कित[४]म्।।१३।।**

**व्याख्या**–(अहं) विहिताञ्जलिः कृताञ्जलिः बद्धपुटाञ्जलिः (सन्) कूर्मं–कूर्मरूपं विष्णुं आधारशक्तिं–रामस्याधारशक्तिं सीतां च प्रार्थये (यत्) श्री रामपीठमध्ये मे मम मनः चित्तं अविशङ्कितं–शङ्कारहितम् अस्तु निश्चयेनेत्यर्थः।।१३।।

**भावानुवाद**–(मैं) करबद्ध होता हुआ कूर्म और आधारशक्ति से प्रार्थना करता हूँ कि प्रभु श्री राम के प्रति मेरी चित्तवृत्ति निःशङ्क होकर प्रवृत्त हो।।१३।।

**रत्नद्वीपे रत्नपीठे[५] रत्नमंडलसन्निधौ।**
**कल्पवृक्षतले रत्नवेदिकायां प्रतिष्ठित[६]म्।।१४।।**

---

१. (शक्तिंच) मूले।
२. (तांजलिः) मूले।
३. ४. (–मस्त्वशंकितं) मूले।
५. (पीठरत्न) मूले।
६. (प्रतिष्ठितं ।।) मूले।

**व्याख्या**–यत्र श्री रामोऽस्ति तत् रत्नपीठम् स एव रत्नद्वीपः, तत्रैव रत्नमण्डलम् तत्रैव कल्पवृक्षः अर्थात् श्री रामस्य पार्श्वे सर्वसुलभं अस्ति।

'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' सन्निधौ निकटे वेदिका यज्ञादि कार्यार्थं वेदिका निर्माणं भवति।।१४।।

**भावानुवाद**–रत्नमण्डल के सामीप्य में रत्नद्वीप के रत्नपीठ में कल्पवृक्ष के नीचे रत्नवेदिका में श्री रामपीठ प्रतिष्ठित है।।१४।।

**रत्नसिंहासनं नौमि राघवस्य महीपतेः।**
**निर्वाणांगारतां यांति यस्याग्रे रविकोटयः।।१५।।**

**व्याख्या**–राघवस्य राघवेन्द्रस्य श्री रामचन्द्रस्य महीपतेः पृथ्वीपतेः रत्नखचितं सिंहासनं नौमि–नमामि। रविकोटयः सूर्यकोटयः कोटिसंख्यकाः सूर्याः निर्वाणांगारती–अग्निज्वाला निर्वाणानन्तरं अंगारतां प्राप्नोति। अर्थात् अद्भुता दीप्तिः तस्य सिंहासने वर्तते।।१५।।

**भावानुवाद**–पृथिवी के स्वामी श्री रामचन्द्र के रत्नसिंहासन को प्रणाम करता हूँ जिसके आगे करोड़ों सूर्य की तपिश भी ठण्डे कोयले की तरह दिखाई देता है।।१५।।

**रे! धर्मज्ञानवैराग्यैश्वर्याः व[1]ह्न्यादि कोणगाः।**
**भयं त्यजन्तु दुष्टानां क्रमो ह्येष वशीकृतौ।।१६।।**

**व्याख्या**–रे! धर्मज्ञानवैराग्यैश्वर्याः–धर्मः ज्ञानं वैराग्यं ऐश्वर्यं क्रमशः वह्न्यादि–अग्न्यादि कोणेषु विद्यन्ते तेषां कृते कथयति कविः दुष्टानां भीतिः मास्तु यदि श्री रामः वशीकृतो वर्तते।।१६।।

---

१. (–श्वर्यादि कोणगाः) मूले।

**भावानुवाद**–हे धर्म, ज्ञान, वैराग्य, ऐश्वर्य आदि सभी जो भी अग्निकोण गामी हैं आप सभी भय को त्याग दें क्योंकि यह अर्थात् प्रभु राम अनुकूल हैं तो दुष्टों का विनाश निश्चित है।।१६।।

**विरोधिनः स्वस्य चतुर्षुपीठ-,**
**गात्रेषु पूर्वादिषुराघवेण।**
**निवशिता वासनया कयेति-**
**भयेन यूयं किल कोणलीनाः।।१७।।**

**व्याख्या**–श्रीराघवेणपूर्वादि चतुर्षु पीठगात्रेषु कया वासनया निवेशिता इति यूयं विरोधिनः कोणलीनाः जाताः।

इन्द्रोवह्निः पितृपतिः नैरुतो वरुणो मरुत्।
कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात्।।
इति वचनात् विरोधिनः कोणे लीनाः तिष्ठन्ति।
श्री रामस्य पार्श्वे सर्वे देवाः कोणलीनाः गौणाः भवन्ति।।१७।।

**भावानुवाद**–अपने पूर्वादि चारों दिशाओं में चार पीठों की स्थापना राम ने न जाने किस बुद्धि से किया है (ऐसा सोचकर) डर के कारण तुम सब विरोधी अग्निकोण में छिप गये हो।।१७।।

**मध्येऽनंतकंदनाले सरोजं-**
**पत्राण्याढ्यां ( पत्रैराढ्यां ) केशरैः कर्णिकां च।**
**स्मारं-स्मारं राघवाधारमुच्चै-**
**र्द्रक्षाम्यक्ष्णा स्वी संसार पारम्[1]।।१८।।**

**व्याख्या**–अनन्तः भगवान् विष्णु तस्य कन्दनाले सरोजम्-कमलम्

---

१. (पारं) मूले।

केशरयुक्तं कर्णिकाभूषणं स्मारं-स्मारं राघवाधारमुच्चै स्थितं दृष्ट्वा स्वीय संसारपारं भवसागरपां द्रक्षामि।।१८।।

**भावानुवाद**–मध्यभाग में कुछ झुके हुए नालदण्ड एवं सकेशर कर्णिका समन्वित सघन पत्रों से परिपूर्ण भगवान् श्री राम के आसनभूत कमल का बारम्बार स्मरण करता हुआ मैं अपने आपको संसार सागर से पार हुआ देखना चाहता हूँ। श्री राम साक्षाद्विष्णु हैं अतः संसार के कारक हैं।।१८।।

**नोट**–मूल पद्य अशुद्ध दृष्टिगोचर होता है। अतः यथा कथञ्चित तात्पर्यार्थ निकाला जा सका है।।१८।।

**अर्कानलनिशानाथमंडलोपर्यवस्थितम् ।**
**अन्योन्याश्रवणतां प्राप्तं गुणत्रयमिहा[1]श्रये।।१९।।**

**व्याख्या**–इह अर्कः सूर्यः अनलः अग्निः निशानाथः चन्द्रमा मंडलस्योपरि अवस्थितं विराजमानं अन्योऽन्याश्रयतां रजस्-तसम्-सतो गुण युक्तां ब्रह्मविष्णुमहेशान् आश्रये।।१९।।

**भावानुवाद**–ग्रन्थारम्भ में (मैं) सूर्य-अग्नि एवं चन्द्रमा-मण्डल के ऊपर विद्यमान (जगत् की उत्पत्ति-स्थिति तथा संहार रूपी कार्य की दृष्टि से) परस्पर सापेक्ष गुणत्रय रजस्, सत्व तथा तमस् स्वरूप ब्रह्मा, विष्णु एवं महेश, का स्मरण कर रहा हूँ।।१९।।

**आत्मानमन्तरात्मानं परमात्मानमेव च।**
**ज्ञाना[2]त्मानं प्रार्थयेऽहं श्री रामे भक्तिरस्तु मे।।२०।।**

---

१. (मिहश्रये) मूले।
२. (ज्ञावात्मानं) मूले।

**व्याख्या**—अहं ज्ञानात्मानं ज्ञानमयं सच्चिदानन्दं परमात्मानं आत्मानं श्री रामं प्रार्थये यत् रामे मे मम भक्तिरस्तु। स्वात्मानमन्तरात्मानं परमात्मानं च आश्रये।।२०।।

**भावानुवाद**—मैं ज्ञानात्मा अन्तरात्मा और अपने अन्दर अधिष्ठित आत्मा को जो कि साक्षात्परमात्मा के रूप में विद्यमान है-से प्रार्थना करता हूँ कि भगवान् राम में मेरी अविरल भक्ति बनी रहे ।।२०।।

**मायातत्त्वं कालतत्त्वं विद्यातत्त्वं नमाम्यह[1]म्।**
**जानकीवल्लभे भक्तिः सर्वदास्त्विति वांछया।।२१।।**

**व्याख्या**—श्री रामे सर्वदा मम भक्तिरस्तु इति धिया मायातत्त्वं कालतत्त्वं विद्यातत्त्वं च नमामि। मायातत्त्वं महालक्ष्मीस्वरूपा सीता कालत्त्वं महाकाली स्वरूपं विद्यातत्वञ्च महासरस्वतीस्वरूपं देवीत्रयं नमामि।।२१।।

**भावानुवाद**—जानकी वल्लभ भगवान राम के (चरणों) में भक्ति की अविरल धारा निरन्तर बहती रहे इसी कामना से मैं मायातत्त्व महालक्षी, कालतत्त्व महाकाली और विद्यातत्त्व महासरस्वती को प्रणाम करता हूँ।।२१।।

**श्री रामासनपद्मप्राक्दलनिष्ठां कृताञ्जलिः।**
**विमलां प्रार्थये देवीं विमलं कुरु मामिति।।२२।।**

**व्याख्या**—विमलां देवीं प्रार्थये या मां विमलं कुर्यात् कृताञ्जलिः बद्धाञ्जलिः सन् श्री रामासने पद्मप्राक्दले निष्ठां देवीं विमलां भगवतीमहं प्रार्थये।।२२।।

**भावानुवाद**—(मैं) प्रणाम पूर्वक (भगवान्) श्री राम के कमलासन के प्रथम पत्र में निवास करने वाली विमला देवी से प्रार्थना करता हूँ कि वे (मेरी) बुद्धि को निर्मल करें।।२२।।

---

१. (हं) मूले।

**कौसलेयासनामंभोजाग्नेयपत्रकृतालया[1]म् ।**
**उत्कर्षिणीं स्तौमि शक्तिमघोत्कर्षण वांछया।।२३।।**

**व्याख्या**—अघः पापम् कौसलेयः श्री रामचन्द्रः अम्भोजाग्नेये अग्निकोणस्थिते कमलपत्रे कृतालयां संस्थितां अघोत्कर्षिणीं पापविखण्डनकर्त्तीं शक्तिं पापनाशिनीं शक्तिं स्तौमी।।२३।।

**भावानुवाद**—भगवान राम के कमलासन के अग्निकोण में स्थित कमलपत्र में रहने वाली उत्कर्षिणी शक्ति की पाप विखण्डन की कामना से स्तुति करता हूँ।।२३।।

**लक्ष्मणाग्रजपीठाब्जदक्षिणाशादलास्थिता।**
**ज्ञानाभिधाना शक्तिर्मे नाशयत्वज्ञतां [2]तमः।।२४।।**

**व्याख्या**—लक्ष्मणाग्रजः-रामचन्द्रः पीठाब्जे-पीठकमले दक्षिणाशा-दक्षिणीदिशि स्थिताः ज्ञानाभिधानः-शक्तिः अर्थात् ज्ञाननाभिकाशक्तिः मे मम अज्ञानतांतमः अन्धकारः नाशयतु।।२४।।

**भावानुवाद**—भगवान राम के कमलासन की दक्षिणदिशा में स्थित जो कमल पत्र है (उस कमलपत्र में स्थित) जो ज्ञानाभिधाना शक्ति है (वह शक्ति) मेरे (अन्तर्मन में स्थित) अन्धकार का विनाश करे।।२४।।

**जानकीशासनाम्भोजे नैर्ऋत्यदलसंस्थिता।**
**क्रियाशक्तिर्निराकुर्यान्मदीयां बुद्धिविक्रिया[3]म्।।२५।।**

**व्याख्या**—जानक्या ईशः = जानकीशः रामचन्द्रः तस्य पीठासने

---

१. (लयां ।।) मूले।
२. (त्वज्ञतांतभा ।।) मूले।
३. (क्रियां ।।) मूले।

नैर्ऋत्यदलसंस्थिता: या क्रियाशक्ति: मायाया: क्रियाशक्ति: मदीयां बुद्धिविक्रियां बुद्धिविपर्ययं निराकुर्यात्।।२५।।

**भावानुवाद**–भगवान राम के कमलासन के नैर्ऋत्यकोण में स्थित कमलपत्र में निवास करने वाली (जो) क्रियाशक्ति (हैं वह) मेरी विगताक्रिया बुद्धि (अर्थात् क्रियारहित बुद्धि का) निराकरण करें।।२५।।

**रघुनाथासनाब्जस्य प्रत्यक्पत्रे व्यवस्थिता।**
**योगाभिधानाकुर्यान्मे योगं श्रीराघवांघ्रिणा।।२६।।**

**व्याख्या**–रघुनाथासनाब्जस्य रघुनाथस्य पीठासनाब्जस्य कमलपत्रस्य प्रत्यक् पृष्ठभागे, पश्चिमभागे व्यवस्थिता-संस्थिता योगाभिधाना योगनाम्नामायाशक्ति: राघवाङ्घ्रिणा रामस्य पदेन मे मम योगं-युज्+घञ्=योग: संयोग: तं कुर्यात्।।२६।।

**भावानुवाद**–श्री रघुनाथ के कमलासन के पृष्ठभागीय कमलपत्र में व्यवस्थित (जो) योगाभिधाना (अर्थात् योग नाम की शक्ति है वह) श्री राम के चरणों से मेरा मिलन करा दे।।२६।।

**भरताग्रजपीठांभ: संभवस्यानिलं द[1]लम्।**
**श्रीताप्रह्वीरमीशांघ्रौ प्रह्वीभूतं करोतु मा[2]म्।।२७।।**

**व्याख्या**–भरताग्रजपीठाम्भ: भरताग्रज: श्री राम: पीठाम्भ: पीठस्थितं जलम् तत्र अनिलदलम् सम्पन्न: वायु: श्रिताप्रह्वीरम् ईशांघ्रौ इशस्य पदाब्जे मां प्रह्वीभूतं करोति।।२७।।

**भावानुवाद**–भरत के बड़े भाई (श्री राम) के पृष्ठभाग में (जो) जल है

---

१. (दलं ।।) मूले।
२. (मां ।।) मूले।

(उस जल में) उत्पन्न (जो) वायु युक्त कमल पत्र है जो कि राम के प्रति समर्पित है वह कमलपत्र श्री राम की चरणों में मेरी (भी) समर्पण की (भावना को) प्रेरित करे।।२७।।

पत्या रघूणां समलंकृतेऽब्जे-
तत्याज[१]यामुत्तरपत्रनिष्ठा[२]म्।
सत्याभिधाना रघुवीरतत्त्वं[३]
मत्यायुतं मां कृपया करोति।।२८।।

**व्याख्या**–रघुणां पतिः रामचन्द्रः तेन समलङ्कृते अब्जे कमले तस्य उत्तरभागस्थितां सत्यभिधानां शक्तिं प्रार्थये यत् सा शक्तिः माम् मत्यायुतं कृपया करोति।।२८।।

**भावानुवाद**–श्री रघुपति राम जिस आसन पर समलंकृत हैं उससे उत्तर भाग में स्थित सत्या नाम की शक्ति मुझे रघुवीरतत्त्व में सुदृढ़ करने के लिए मेरी मति को विस्तृत करे।।२८।।

दशवक्रांतकाक्रांतपद्मेशानदलाश्रिते ।
ईशाने पाहि मां राममीशं मे वशतं नय।।२९।।

**व्याख्या**–दशवक्त्रः–दशाननः तस्य अन्तकः हन्ता तस्य पदकमलस्य ईशाने स्थितां शक्तिं प्रार्थये यत्–सा–शक्तिः श्री रामं मम वशे कुर्यात्, मां पाहि रक्षतु च। ईशाने हे ईशाने ईशानस्थिता शक्तिः।।२९।।

**भावानुवाद**–दशानन रावण केअन्तक हन्ता श्री राम के पद्मदल से ईशान भाग में स्थित शक्ति राम को मेरे वश में कर दें।।२९।।

---

१. (तत्याजयामुत्तरपत्रनिष्ठां[२] ।।) मूले।

३. (तत्त्वमत्या–) मूले।

**अनुग्रहे राघवपीठपद्म-**
**सत्कर्णिका गेहकृताधिवासे।**
**अनुग्रहं मय्यनुगे विधेहि-**
**येन प्रसीदेदिह वासुदेवः।।३०।।**

**व्याख्या**–राघवपीठकमलस्य हे अनुग्रहे हे अनुग्रहशक्ते सति सत्कर्णिकागेहे अधिवासे, अनुगे राघवस्य अनुगमनं करोति या मयि अनुग्रहं विधेहि यस्मात् वासुदेवः इह अस्मिन् लोके ममोपरि प्रसन्नः स्यात्।

**भावानुवाद**–हे अनुग्रहे! श्री रामचन्द्र के सिंहासन के पीठ कमल पर सत्कर्णिका शक्ति विराजमान है, वे मुझ पर प्रसन्न होने की कृपा करें जिससे वासुदेव मुझ पर प्रसन्न हों।।३०।।

**श्री रामपीठदेवेषु सुप्रसन्नेषु मेऽ[१]धुना।**
**तदाराधनविध्यंते रचयेदिहतिंतुकः।।३१।।**

**व्याख्या**–श्रीरापीठदेवाः यदा प्रसन्नाः भवन्ति तदा तेषामाराधनविधौ-अन्ते तिन्तुकः सर्षपबीजं रचयेत् यस्मात् दुष्ट ग्रहाणां प्रभावः क्षीणो भविष्यति।

**भावानुवाद**–श्री राम के सिंहासन के सभी देव जब प्रसन्न हो जाते हैं तब उनकी आराधना में सर्षप बीज (सरसों) छींट दें जिससे दुष्ट ग्रहों का प्रभाव क्षीण हो जाय।।३१।।

**अथोपचारमालया निरस्तपापजालया।**
**भजे कजेक्षणं रघुप्रवीरमीरितोऽ[२]धुना।।३२।।**

**व्याख्या**–एवं प्रकारेण उपचारसमूहेन समस्तपापजालः निरस्तो भवति। किञ्चित् कालं रघुप्रवीरं भजे यत् प्रेरणया अधुना श्रेयो भवेत्।।३२।।

---

१. (मेधुना ।।) मूले।
२. (तोधुना ।।) मूले।

अत्र मुद्गलभट्टः उपचारमालायाः प्रभावं दर्शयति यत् पापजालं अनया निरस्यते।

**भावानुवाद**–इस उपचारमाला के (पाठ से) सभी पाप नष्ट हो जाते हैं, (इसलिए) कुछ समय मैं रघुप्रवीर का भजन करता हूँ, जिससे श्रेय होगा।।३२।।

आयाहि मायाहितमानव[१]च्च-
जायानुजायासकृतानुगत्व ।
तिष्ठा[२]अत्र पीठेत्हृतकष्टकीर्त्ते-
कंदर्पमूर्त्ते रघवे नमस्ते।।३३।।

**व्याख्या**–आयाहि आगच्छ मायाहितमानवत्वं जाया पत्नी सीता, हे कष्टहारक कीर्तिमन्! कन्दर्पमूर्त्ते! रघवे नमस्ते कन्दर्पः कामदेवः। हृतं कष्टं येन तत्कीर्त्या। यमकालङ्कारः।।३३।।

**भावानुवाद**–हे कन्दर्पमूर्त्ति रघुनाथ आपको नमस्कार है। आपके पीठ में निष्ठा शक्ति स्थित है जिससे आप सभी के कष्ट हर लेते हैं और आप कीर्तिमान् हो जाते हैं। ये माया शक्ति सीता आप सर्वदा राम का अनुगमन करती हैं और भावता की रक्षा करती हैं।।३३।।

[३]यत्क्षालयामि तव पादसरोज युग्मं-
सोऽयं न ते रघुपतेऽत्र किलोपचारः।
किंत्वस्ति हृन्मम निलीनमनन्यगामि-
तत्पापपंकहृतये कृत एष यत्नः।।३४।।

---

१. (त्वच-) मूले।

२. (ष्ठात्र) मूले।

३. मूलेतु–यत्क्षालयामितवपादसरोजमूलंसोयं नतेरघुपतेऽत्रकिलोपचारः किंत्वस्तिहृन्मम-निलीनमनन्यगामितत्पापपंकहृतयेकृतएषयत्नः।

**व्याख्या**–हे रघुपते! अहं यत् तवपादयुग्म प्रक्षालनं करोमि तन्न तव उपचारो वर्तते। उपचारः पूजात्वं पापपङ्कं दूरी करोषि इति धिया ममायं यत्नः।।३४।।

**भावानुवाद**–हे रघुपते! मैं जो आपके चरणकमल का प्रक्षालन करता हूँ, वह तुम्हारा उपचार (पूजार्चना) नहीं है। मेरे हृदय में यह भाव है कि आप पापपंक को दूर करते हैं।।३४।।

**पाद्याम्बु परमा[1]द्ध्यस्य रामस्यांघ्रिद्वयेऽर्पितम्[2]।**
**अभिषिक्तो मया तेन भवतात्पार्वतीपतिः।।३५।।**

**व्याख्या**–मया रामस्य पादेद्वये यत्पाद्यम् अर्पितं, तेन पार्वतीपतिः शिवः अभिषिक्तः भवतात् इति मे प्रयत्नः। पाद्याम्बु पादे पातितं जलम्, परमाद्ध्यस्य परमसम्पन्नस्य।।३५।।

**भावानुवाद**–मैं ऐश्वर्य सम्पन्न श्री राम के पादप्रक्षालन जो करता हूँ उससे पार्वतीपति श्री शिव का अभिषेक हो। श्री राम की पूजा शिव की ही पूजा है।।३५।।

**अर्घ्यमर्घ्यरघूत्तंस! गृहाण ज[3]लसंयुत[4]म्।**
**तेन साधय सा[5]धीयं सदा मे वांछितं फलम्।।३६।।**

**व्याख्या**–हे पूजनीय रघूत्तंस! मया दत्तं अर्घ्यं गृहाण। तेन मम वांछितं फलं भवतु–इति आशा।।३६।।

---

१. (माढयस्य) मूले।
२. (तं ।।) मूले।
३. [ण (रिक्त)ल) मूले।]
४. (तं ।।) मूले।
५. (साधीयः) मूले।

**भावानुवाद**–हे रघूत्तंस रघुकुलश्रेष्ठ! मेरे द्वारा समर्पित जल ग्रहण करें जिससे मेरे वाञ्छित फल सदा मुझे प्राप्त हो।।३६।।

**मयोपकल्पितं तोयं यदाचामति राघवः।**
**तत्तोयमाचमति मे चित्रं संसारसागर[1]म्।।३७।।**

**व्याख्या**–मया उपकल्पितं तोयं जलं यत् राघवः आचमति तत्तोयम् संसारसागरं वर्तते। तस्मात् भवसागरस्य वासो जायते।।

**भावानुवाद**–श्री राम भगवान् मेरे द्वारा उपकल्पित पूजा के लिए प्रदत्त जल को आचमन करके मेरे दुःख सागर को पी जाते हैं।।३७।।

**मधुपर्कमर्कभवभूरिभूमिभृ-**
**न्मणिमालिकाललितमध्यनायकः।**
**समयांभवंतमिह कल्पितं मया-**
**विनयाद्गृहाणगृहणीयुत प्रभो।।३८।।**

**व्याख्या**–हे गृहिणीयुतप्रभो! राम! मणिमालिकाललितमध्यनायकः राम! यत् इह कल्पितं मया भवदर्थं जलं तत् कृपया गृहाण तथा च मधुपर्कञ्च गृहाण अथवा स्वीकुरु।।३८।।

**भावानुवाद**–हे मणिमालिकाललित पृष्ठभाग के मध्यनायक हे राम! कृपया गृहिणी सीता सहित प्रभो सूर्यवंशोद्भव! मेरे द्वारा अर्पित मधुपर्क ग्रहण करें। आपके पास मेरे द्वारा कल्पित इस अर्घ्य को ग्रहण करें।।३८।।

**अक्तंचंपकमल्लिकापरिमलैस्तैलैरथोद्वर्तितम्[2] ।**
**कस्तूरीघनसारकुंकुमरजः पंकैरनंगप्रभम्[3]।।**

---

१. (रं ।।) मूले।
२. (तं) मूले।
३. (भं ।। मूले।

**चंचच्चंदनकल्कसारितशिरस्तैलंकवोष्णैर्जलैः।**
**स्नातं कांतमहं विदेहदुहितुः स्वांते नितातं श्रये।।३९।।**

**व्याख्या**–अक्तं पूर्णं चम्पकमल्लिका परिमलैः गन्धैः तथा तैलैः उद्वर्तितं सुरभि युतं, कस्तूरीघनसारकुंकुमरजः पंकैः अनंकप्रभं चन्दनकल्क सारितशिरस्तैलं कवोष्णैर्जलैः विदेहदुहितुः स्नातं कान्तमहं नितान्त श्रये आश्रये।।३९।।

**भावानुवाद**–मैं रक्तचम्पकमल्लिका आदि पुष्पों से गन्ध युक्त तेल से मालिस किए हुए, कस्तूरी घनसार (कपूर) कुंकुम के रज से सुशोभित अनङ्ग (कामदेव) के सदृश, शीतल चन्दन से युक्त कल्क के द्वारा प्रक्षालित शिखवाले, कवोष्ण जल समशीतोष्ण जल अर्थात् गुनगुने पानी से स्नान किये हुए विदेह (जनक) की दुहिता के कान्त श्री राम को नितान्त पूर्णरूप से आश्रय लेता हूँ।।३९।।

**भ्राम्यन्नभःस्थ शरदभ्रमसमाभवक्त्र-**
**प्रोत्सारितस्नपनवारिलवांगयष्टिम्[१] ।**
**भूषोज्झितं विरुचि चंद्रभसंघसाध्य-**
**रागांबराभमहमीश्वरमाश्रितोऽस्मि ।।४०।।**

**व्याख्या**–अहं रागांबराभम् ईश्वरमाश्रितोऽस्मि। यस्य कान्तिः शरदभ्रसमा वर्तते। अभ्रं मेघो वारिवाहः। स्नपनवारिणा लवांगयष्टिमीश्वरं भूषोज्झितं चन्द्रस्य रुचिः यस्मिन् तम् तादृशम्।

अहमीश्वरमाश्रितोऽस्मि। ईश्वरस्य आश्रयं प्राप्तवानस्मि। अम्बरसदृशं रागाम्बरं शरदर्त्तौ यथा अभ्रकान्तिः भवति तथा च स्नपनवारिणा लवांगयष्टिरिव यस्य सौन्दर्यमेवं च यथा भूषयाचन्द्रभकान्तिः वर्तते तथा च सायंकाले पीताम्बराभं रुचिरं–ईश्वरमाश्रितोऽस्मि।।४०।।

---

१. (ष्टिं ।।) मूले।

**भावानुवाद**–मैं उस ईश्वर पर आश्रित हूँ जिनकी शरद ऋतु के मेघ के समान कान्ति है, जो स्नपनवारि से स्नान करके लवांग यष्टि के समान सुशोभित है जिनके आभूषण से चन्द्रमा की कान्ति तिरस्कृत हो जाती है।।४०।।

**कटितटपरिहितपटुपटवर्णनिगीर्णप्रभंसौवर्ष्मम्[१]।**
**कटिसूत्रं चकितदृशाविलोकयं तं भजे रघूत्तंसम्[२]।।४१।।**

**व्याख्या**–यज्ञोपवीतसमये बालरामस्य छविः वर्ण्यते। कटितटे परिहृतं पटविशेषं स्वर्गीयप्रभयुक्तं कटिसूत्रं दधन्तं चकितं विलोकयन्तं श्री रामं भजे रघूत्तंसम् रघूणां श्रेष्ठम्।।४१।।

**भावानुवाद**–यज्ञोपवीत के समय बालक राम की छवि का वर्णन है। कटि पर विशेष कटिसूत्र को धारण करके राम सबको आकर्षण से चकित कर रहे हैं। मैं उस रघुपति राम को भजता हूँ।।४१।।

**स्वांसासंगिनितप्तकांचननिभेगण्येतरोद्यद्गुणे-**
**किंचिन्म्लानशिरीषपुष्पमृदुले प्रावारपीताम्बरे।**
**स्पृष्टेऽनुस्मृतजानकीभुजलते सादृश्यतः पश्यत-**
**श्चित्ते मेऽस्तु मुदेममाद्यमधुरस्मेराननोराघवः।।४२।।**

**व्याख्या**–मम चित्ते स्मेराननो राघवः मम मोदाय भवतु। तप्तकांचन निभेगण्येतरोद्यद्गुणे पीताम्बरे शिरीषपुष्पमृदुले, जानकी भुजलते स्पृष्टे सादृश्यतः पश्यतः मेऽद्य मधुर स्मेराननो हर्षाय भवतु।।४२।।

**भावानुवाद**–मेरे हृदय में हँसते हुए श्री राघव आनन्द को बढ़ाते रहें। वे तप्त सोने की कान्ति वाले हैं, किञ्चित् मुरझाये शिरीषपुष्प की तरह, पीताम्बरधारी,

---

१. (र्ष्मं ।।) मूले।
२. (सं ।।) मूले।

जानकी की भुजारूपी लता से वेष्टित हैं और सीता का सादृश्य भी उनमें विराजमान हैं।

इस श्लोक में अनुप्रास अलङ्कार और शार्दूलविक्रीडित छन्द है।।४२।।

एतिछायापथछायामनभ्रं गगनप्रभे।
श्री रामवपुषि ध्यायेद्ब्रह्मसूत्रं तदुज्वलम्[१]।।४३।।

व्याख्या–'अभ्रंमेघोवारिवाहः' इत्यमरः, श्री रामस्य वपुः अभ्रं तुल्यं गगनप्रभा गगन सदृशा कान्तिः, तत्र उज्ज्वलं ब्रह्मसूत्रं ध्यायेत्।।४३।।

भावानुवाद–यज्ञोपवीत संस्कार करके उज्ज्वल ब्रह्मसूत्र धारण करते हुए श्री राम के शरीर का ध्यान करता हूँ। गगन तुल्य छायावाले दिव्य शरीर का ध्यान करता हूँ।।४३।।

दांते कांते पादुके राघवांघ्रिद्वन्द्वेनाधः संगते यत्प्रभूते।
धन्यं मन्ये तं तथाभूतदं तं पूण्योदंतं दंतिनंदांतहृत्सु।।४४।।

व्याख्या–श्रीराघवस्य पादछन्दे, दान्ते कान्ते पादुके, धन्ये मन्ये तं तथाभूतदं पूण्योदंतं दन्तिनं पूण्योदं तं दान्तहृत्सु हृदयेषु (मन्ये)।।४४।।

भावानुवाद–श्रीराघव के पैरों में चमकती हुयी पादुका जो संगमर्मर पर शोभती है, मैं उसे सव कुछ देनेवाले को, धन्य समझता हूँ और पुण्य का उदय करने वाला समझता हूँ।

यह श्लोक 'उपेन्द्रवज्रा' छन्द और अनुप्रास अलङ्कार से युक्त है।।४४।।

पर्यस्तकुंतलगलज्जलबिंदुमिंदु,
लज्जावहास्यमणुभक्तसभावहास्यम्[२] ।

---

१. (ज्वलं ।।) मूले।
२. (–स्यं ।।) मूले।

दास्यं गतो हृदि दशास्य[1]रिपुं व्रजंतं-
सिंहासनाभिमुखमीड्[2]यमहं स्मरामि।।४५।।

**व्याख्या**–हृदि हृदये दशास्यरिपुं रामं व्रजन्तं दास्यं गतोऽहं सिंहासनमुखमीड्यं स्मरामि–स्मरणं करोमि। कुन्तलात् गलत् द्रवत् जलम् इन्दु लज्जावहास्यं भवति। दास्ये दशास्ये इत्यत्र अनुप्रासः, विन्दुमिन्दु इत्यत्रापि-अनुप्रासः।।४५।।

**भावानुवाद**–श्री रामचन्द्र के केश से गिरता हुआ जल मानो चन्द्रमा का परिहास कर रहा है। हृदय में दशास्य (रावण) के शत्रु भी श्रीराम के पास जाता हुआ दास्य भाव से मैं सिंहासन के अभिमुख पूज्य भगवान का स्मरण करता हूँ।।४५।।

बलीयसा देवपदावधारय
स्वधामपद्यामनवद्यसंश्रयम्[3]।
निजासनं कांचनसिंहसुन्दर[4]म्
परं तडित्वानिव मेरुशेखर[5]म्।।४६।।

**व्याख्या**–बलीयसा महीयसा देवपदौ अवधारय यस्य आश्रयः स्वधाम इव जायते। "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते।" तस्य आसनं काञ्चनसिंहसुशोभितं वर्तते। यथा मेरुशेखरे विद्युत् शोभते तथा सुशोभितं भवति रामस्य स्वर्णसिंहासनमिति। अत्र उपमालङ्कारः।।४६।।

**भावानुवाद**–देवस्वरूप श्री रामचन्द्र के दोनों चरणकमल बहुत ही

---

१. (स्य (रिक्त) पुं) मूले।
२. (मीडय) मूले।
३. (यं ।।) मूले।
४. (रं) मूले।
५. (रं ।।) मूले।

महत्त्वपूर्ण हैं, उसकी कृपा से अपना धाम प्राप्त कर शाश्वत आश्रय हो जाता है। अपने राम का आसन कांचन सिंहासन बना हुआ सुन्दर है जैसे मेरु शिखर पर इन्द्रधनुष (या विद्युत्) की शोभा होती है वैसे ही सिंहासन पर दोनों पैर शोभायमान हो रहे हैं। यहाँ उपमा अलङ्कार है।।४६।।

**सौवर्णे मंडपेऽस्मिन्सुरतरुणतरुछायासंछादितेऽधः।**
**प्रोद्यन्मुक्ताविताने दिनकरनिकरस्फीतचंचद्विमाने।।**
**क्षीरांभोराशिफेनोपममृदुलतरप्रच्छदेस्व[1]च्छदेशे।**
**हैमेसिंहासने[2]ऽष्टामलदलकमले राघवं चिन्तयामि।।४७।।**

**व्याख्या**–राघवं ध्यायामि चिन्तयामि। असौ रामचन्द्रः सौवर्णमण्डपे विराजमानो राजते। हैमसिंहासनेऽष्टामलदल कमले विद्यते। सुराणां तरुः तरुणः युवा, तरुणतरुच्छायाधः संछादिते अथवा प्रोद्यन्मुक्ताविताने दिनकरः सूर्यः, करःरश्मिः, तद्युक्ते विमाने क्षीरं दुग्धं, क्षीराम्भोराशि क्षीरसमुद्रस्य मृदुलतरफेनोपमे स्वच्छदेशे श्री रामं चिन्तयामि। अत्र स्रग्धरावृत्तिः।।४७।।

**भावानुवाद**–मैं सोने के सिंहासन पर विराजमान श्री रामचन्द्र का ध्यान करता हूँ। वह स्वर्णसिंहासन स्वच्छ अष्टकमल पर स्थित है। देवताओं के तरुणतरु की छाया के नीचे मुक्ता के वितान (चन्दवा) में, दिनकर के किरण से शुभ्र विमान जैसा हो गया हैं। क्षीर समुद्र के फेन के समान स्वच्छ प्रदेश में हैमसिंहासन स्थित है उस पर विराजमान उन राघव का अपने इष्ट हेतु मैं भजन करता हूँ।।४७।।

**भक्तं सिक्तं कुंकुमैः स्वर्णपात्रा-**
**सक्तं व्यक्तं भ्रामितं भर्त्तुरग्रे।**

---

१. (स्वच्छदेशे) मूले।
२. (नेष्टा) मूले।

तत्सौंदर्याविष्टदृष्टे प्रयाता-
भूताः सर्वे स्वं बलिं कल्पयंतु।।४८।।

**व्याख्या**–सर्वे बलिं भक्षमाणाः भूताः अत्र स्वबलिं कल्पयंतु। कुंकुमैः सिक्तं युक्तं भक्तं अक्षतरूपम् भर्त्तुरग्रे भ्रामितं तत्सौन्दर्याविष्टदृष्टे प्रयाताः। अत्रानुप्रासालङ्कारः।।४८।।

**भावानुवाद**–मेरे द्वारा कुंकुम से सिक्त भात (पके हुए चावल) स्वर्णपात्र में रखा हुआ है, मैं हाथ घूमाकर आपको समर्पित करता हूँ। उस सौन्दर्य से आविष्ट होकर सभी भूत गण अपनी बली की कल्पना करें अर्थात् वे उस बली का भक्षण करें।।४८।।

मुकुटकटकमुद्रोदारकेयूरहारा-
नुकृतमकर[1]वल्गत्कुण्डलालङ्कृताङ्गे।
दुरितचयविरामे वाममास्थरामे,
सरसमिह मनो मे भक्तिमभ्येतु रामे।।४९।।

**व्याख्या**–मुकुट किरीट शिखरं वा कटकबद्ध हेमकटकां मुद्रोदार-अङ्गुलीयका अनुकृत केयूरके बाहौ शिरसि वा हार मकरवल्गत्कुण्डलालङ्कृताङ्गे दुरितचय विरामे वामभागस्थ रामे इह सरसं मे सरसं मनो रामे भक्तिमभ्येतु लीनं भवतु।।४९।।

**भावानुवाद**–मुकुट, कटक (करधनी), मुद्रा (अँगूठी), सुन्दर केयूर (बाजूबन्द), मकराकार चञ्चल कुण्डल शरीरवाले, पापविनाशक, प्रिया सीता से अलङ्कृत वामपार्श्व भगवान् श्री राम में यह मेरा अनुरागी मन श्रेष्ठ भक्ति को प्राप्त करे। यहाँ मालिनी छन्दः और अनुप्रास अलङ्कार है।।४९।।

---

१. (करेवल्ग) मूले।

कर्पूरकुंकुमरजोमृगनाभिमिश्र-
श्रीखण्डकल्पितविशेषककांतभालम्[1]।
रम्यांगरागमनुजत्रयवीज्यमानम्[2]
चेतश्चिरंतमनुचिंतय रामचन्द्र[3]म्।।५०।।

**व्याख्या**–मे चेतः चिरं रामचन्द्रं चिन्तयतु कर्पूरकुकुमरजै मृगनाभि मिश्रितं श्रीखण्डचार्चितं भालं यस्य तम् रम्यांगरागेण अनुजत्रय वीज्यमानं श्री रामं चिन्तयामि। वसन्ततिलका छन्दः। अनुप्रासालङ्कारः।।५०।।

**भावानुवाद**–मेरा मन चिरकाल तक रामचन्द्र के चिनतन में लीन रहे श्री राम का भाल (कपाल) कपूर कुंकुम रज तथा कस्तूरी मिश्रित श्रीखण्ड आदि से सुशोभित है। उनके शरीर में रम्य अंगराज लगा हुआ है तथा तीनों भाई उन्हें पंखा झल रहे हैं। यहाँ वसन्ततिलका छन्द और अनुप्रास अलङ्कार है।।५०।।

सतुलसीदलकोमलमंजरीबकुलपाटलीकेतकमल्लिकाः।
सुरभिधूपसुधूपितराघवालकभरे निहिताः सुखयंतु मा[4]म्।।५१।।

**व्याख्या**–तुलसीदलकोमलैः सह पाटल–केतक मल्किादियुक्तः, सुरभि–धूपधूपित श्रीराघवस्य अलकाः केशाः मां सुखयन्तु। अत्र अनुप्रासालङ्कारः।।५१।।

**भावानुवाद**–कोमल तुलसीदल के साथ, पाटलि (गुलाब) केतक तथा मल्लिका जूही के गन्ध से और धूप से सुधूपित श्री राम के बाल (अलक या केश) समूह मुझे सुख दें। यहाँ अनुप्रास अलङ्कार है।।५१।।

भक्तप्रार्थितकल्पवल्लिललिते सीते समाकर्णय-
त्वं सूर्यांचयमौलिमण्डनमणे श्रीलक्ष्मणक्ष्मापते।

---

१. (लं ।।) मूले।
२. (नंचचेत) मूले।
३. (न्द्रं ।।) मूले।
४. (–यंतुमां ।।) मूले।

रे शा[१]र्ङ्गाभिधचापकिंचविशिखा यूयं प्रधानानि मे-
रंकं मां समुपागतं कथयत श्री रामपृथ्वीभुजे।।५२।।

**व्याख्या**–इति प्रधानम्। हे सीते त्वं भक्तानां प्रार्थनां श्रुत्वा कल्पवल्लिललिता भवसि अतः त्वं समाकर्णय। हे सूर्यवंशे समुत्पन्न राजालक्ष्मण! रे शार्ङ्ग! यूयं सर्वे मां समुपागतं रङ्कं श्री रामचन्द्राय कथयत। अत्र शादूलविक्रीडितं छन्दः।।५२।।

**भावानुवाद**–भक्तिपूर्वक प्रार्थना करने पर कल्पलता के समान हे सीते! कृपया मेरी बात सुनें। हे राजा लक्ष्मण आप सूर्यवंशी मणियों से सुशोभित हो, हे रामचन्द्र के शार्ङ्ग धनुष आप भी सुनें आप सब प्रधान हो। मैं भिक्षुक बनकर आया हुआ हूँ, कृपया श्री पृथिवीपति राम को मेरे आगमन की सूचना दें।।५२।।

फर[२]सागरददिनकरभुवनभूमिपालसंमितस्वरयुक्।
दहनो दहतु सबिंदुर्दुरितं श्री रामः षडात्मा।।५३।।

**व्याख्या**–(फरम् (फल+अच्, रलयोरभेदः) फलक इत्यर्थ) जलनिधिः सूर्यः, पृथ्वी, भूमिपालस्य स्वरयुता श्री रामः दहनो दुरितं दहतु। सः (श्री रामः) षडात्मा वर्तते।।५३।।

**भावानुवाद**–समुद्र सूर्य पृथ्वी भूमिपाल के स्वर से युक्त श्री राम अग्नि की तरह कष्टों को जला देते हैं। अर्थात् राम सब कष्ट के निवारक हैं।।५३।।

आत्मन्निवृत्तेसदयांतरात्मन्-
देविप्रतिष्ठेपरमात्मसंज्ञे ।
विद्येऽनघेज्ञानमयांबुजात्मन्-
शांते मनो मे नय रामचन्द्रम्[३]।।५४।।

---

१. (रेशाऽर्वविध-) मूले।
२. (फरसागर-) (फले)। (फरम् (फल+अच्, रलयोरभेदः) फलक-इत्यर्थः।)
३. (-चंद्रं ।।) मूले।

**व्याख्या**–आत्मन्निवृत्ते सदपांतरात्मन् अनद्ये परमात्मसंज्ञे देवि विद्ये प्रतिष्ठे ज्ञानमयांबुजात्मन् हे मम शान्तं मनः मे श्री रामचन्द्रं नय।।५४।।

**भावानुवाद**–हे प्रतिष्ठा देवि! आप परमात्म रूपा हैं, मेरी आत्मा अज्ञानमय कमल के समान है, आप मेरे शान्त मन को श्री रामचन्द्र के पास ले चलें। हे आत्मन् चित्तवृत्ति के बादआप सदयान्तरात्मा हो जाती हैं। यह उपजाति छन्द है।।५४।।

**श्रीवासुदेवायनमः श्रियै च**
**संकर्षणायाथनमोऽ[1]स्तु शांत्यै।**
**प्रद्युम्नसप्तीतिक सानिरुद्धे**
**रते मतिं मे कुरु रामचन्द्रे।।५५।।**

**व्याख्या**–नमः संकर्षणाय, नमः प्रद्युम्नाय, नमः अनिरुद्धाय, नमो वासुदेवाय मे मतिं श्री रामचन्द्रे कुरु। श्रियै लक्ष्म्यै, संकर्षणाय अथ शान्त्यै नमः। प्रद्युम्न! अनिरुद्ध! कृपया मे मनः रामचन्द्रे कुरु।।५५।।

**भावानुवाद**–संकर्षण, प्रद्युम्न, वासुदेव, लक्ष्मी, अनिरुद्ध एवं शान्ति सभी को प्रणाम करते हुए प्रार्थना करता हूँ कि आप सभी श्री रामचन्द्र में रत मेरे मन को प्रभु के चरणों में लगा दें।।५५।।

**प्रियोऽसिदेवस्यपरंहनूमन्-**
**सुग्रीवमित्रंत्वमपीश्वरस्य ।**
**भ्रातातिभक्तो भरतत्वमस्य-**
**येनोज्झितं प्राप्तमपीहराज्य[2]म्।।५६।।**

**व्याख्या**–हे हनूमन् त्वं देवस्य प्रियोऽसि। त्वं सुग्रीवस्य मित्रमसि, त्वं

---

१. (–नमोस्तु) मूले।
२. (राज्यं।।) मूले।

अति भक्तो भ्राता भरत इव असि। "तुम मम प्रिय भरत सम भाई" इति तुलसी दासः। भरतः राज्यं सम्प्राप्यापि सर्वं त्यक्तवान्। अत्र उपजातिः छन्दः।।५६।।

**भावानुवाद**–हे हनूमन्! आप देव के प्रिय हैं, आप सुग्रीव के मित्र हैं, आप भ्राता भरत के समान अति भक्त हैं, जिन्होंने राज्य प्राप्त करके भी त्याग दिया। यह उपार्जित छन्द है।।५६।।

**बिभिषणस्वार्थमतिं जहीहि,**
**हैमंपुरंप्राप्यविनाप्रयास[1]म् ।**
**वदान्यमेनं समुपाश्रितस्त्वं**
**कुरुष्व कार्याणिजनस्यशा[2]श्वत्।।५७।।**

**व्याख्या**–हे बिभीषण। त्वं स्वार्थमतिं जहीहि। विनां प्रयासं हैमं पुरं लङ्कानगरं प्राप्तवान् असि, किन्तु त्वं रामस्य समुपाश्रितः वर्तसे। अतः जनकल्याणकार्यं कुरु। उपजातिः छन्दः।।५७।।

**भावानुवाद**–हे बिभीषण आप स्वार्थ बुद्धि का परित्याग करें, विना प्रयास के ही आपने सोने की नगरी लङ्का प्राप्त की थी। आप राम के उपाश्रित हैं, अतः जन कल्याण के लिए कुछ कार्य करें।।५७।।

**फणांग[3]णच्छत्रधराहिनाथ-**
**त्वमस्य देवस्य किलानुजो[4]ऽसि।**
**तुल्यं ददावंगदयौवराज्यं-**
**राजारघूणांतिलकः किलाय[5]म्।।५८।।**

---

१. (–सं ।।) मूले।
२. (–शश्वत् ।।) मूले।
३. (फणागणछत्र) मूले।
४. (नुजोसि) मूले।
५. (किलायं ।।) मूले।

**व्याख्या**–हे फणांगणच्छत्र धारिन् शेषनागः। लक्ष्मण! त्वमस्य देवस्य रामस्य अनुजोऽसि। अयं रघूणां तिलकः राजा रामचन्द्रः अङ्गदाय यौवराज्यं प्रादात्। उपजातिः छन्दः।।५८।।

**भावानुवाद**–हे फणिधारी शेषनाग लक्ष्मण! आप श्री राम के अनुज हैं, अंगद को रघुकुल तिलक श्री राम ने यौवराज्य दिया। वे महान् हैं। उपजाति छन्द है।।५८।।

**शत्रुघ्नत्वं ननु रघुपतेः प्राणतुल्यो[1]ऽसिबंधु-**
**स्त्वमृक्षाणामधिपसततं सेवकोराघवस्य।**
**याचे किंचित्कृतकरपुटस्तेनभावेन युष्मान्-**
**सर्वे यूयं रचयत मयि प्रीतिमीशानुरक्ते।।५९।।**

**व्याख्या**–हे शत्रुघ्न! त्वं रघुपतेः बन्धुः प्राणतुल्योऽसि, हे ऋक्षाणामधिप! जाम्ववन्त! त्वं राघवस्य सेवकोऽसि। अतः करबद्ध मम प्रार्थना वर्तते यत् यूयं सर्वे मयि राघवे प्रीतिं रचयत। मन्दाक्रान्ताच्छन्दः।।५९।।

**भावानुवाद**–हे शत्रुघ्न! आप रघुपति के प्रिय भ्राता हैं, हे ऋक्ष के अधिपति जामवन्त! आप राघव के सेवक हैं। आपसे हाथ जोड़कर प्रार्थना है कि आप सब मुझे ईश श्री राम में अनुरक्त मुझको राम से परिचय करा दें।।५९।।

**सृष्टेजयंतविजययाभिधमंत्रिवर्य-**
**सौराष्ट्रराष्ट्रपरिवर्द्धनसन्नकोप ।**
**त्वं धर्मपालममवाचमिमांसुमंत्र**
**श्रृण्वंतुकोसलपतिं ननु मां नयंतु।।६०।।**

**व्याख्या**–हे मन्त्रिवर्यविजय! सौराष्ट्र देशे त्वं राष्ट्रपरिवर्द्धन सन् दृश्यते तत्र न कोपः। अतः त्वं धर्मपालोऽसि, मम वाचं श्रृणु कृपया मां कौसलपतिं नयन्तु।।६०।।

---

१. (तुल्योसि) मूले।

**भावानुवाद**–हे विजय नामक मन्त्रिवर्य। आप सौराष्ट्र देश में बहुत बढ़ चढ़कर परिवर्द्धन कर रहे हैं इसमें कोई क्षोभ नहीं है। आप धर्मपाल हैं, हे सुमन्त्र! आप सब सुनें, कृपा करके कौशल पति के पास मुझे ले चलें।।६०।।

**वसिष्ठशिष्टोरघुनायकस्य**
**भवान्भवोच्छेदकरः पुरोधाः।**
**गर्भस्थितो[१]ऽपीश्वरतत्त्वनिष्ठ-**
**त्वं वामदेवा[२]श्रितरामदेवः।।६१।।**

**व्याख्या**–हे गुरुवशिष्ठ! भवान् रघुनायकस्य पुरोधाः भवोच्छेदकरो गुरुः। भवान् गर्भष्थोऽपि ईश्वरतत्त्वनिष्ठः श्री रामदेवः त्वमाश्रित एव। उपजातिः छन्दः।।६१।।

**भावानुवाद**–हे रघुनाथ के गुरु वशिष्ठ आप संसार से पार लगाने वाले कुल पुरोहित हैं, आप गर्भ में रहकर भी ईश्वरतत्त्व को जानने वाले हैं। आप वामदेव पर आश्रित राम के गुरु हैं। हमारे ऊपर भी कृपा करें।।६१।।

**आबालगोपालविशालशील-**
**जा[१]बालसंज्ञत्वमसीशमान्य।**
**त्वया प्रणीतेनजलेनकल्पा-**
**हिल्यापतेपूतमशेषमेतत् ।।६२।।**

**व्याख्या**–आबाल गोपालविशालशीलजाबालसंज्ञत्वमीशः मान्यः। त्वया प्रणीतेन जलेन अहिल्यापतेः पूतशेषमेतत्। अक्षपादो महायोगी तद्वत्। गोदावरी समानैता अहिल्यायाः पतिः प्रभुः।।६२।।

---

१. (स्थितोपि) मूले।
२. (देवश्रित) मूले।
३. (जाछाल) मूले।

**भावानुवाद**–हे जाबाल संज्ञाधारि! आप बचपन से ही बड़े शीलवान् हैं। ईश राम के मान्य हैं। आप के द्वारा लाये गये जल से अहिल्यापति पूर्णरूप से कृतकृत्य हो गये। यहाँ अनुप्रासालङ्कार है।।६२।।

**वहन्भरद्वाजतवापिसंज्ञां**
**विज्ञायते कार्यपटु पतत्री।**
**द्वितीयसृष्टावपिकिंचशक्त-**
**स्त्वं कौशिक श्रीरघुनाथभक्तः।।६३।।**

**व्याख्या**–तवापि भरद्वाजसंज्ञा वर्तते। त्वम् कार्यपटुः। त्वं रघुनायकस्य भक्तः।।६३।।

**भावानुवाद**–आप भरद्वाज नाम से प्रसिद्ध हैं, आप कार्यपटु हैं। आपने द्वितीय सृष्टि की रचना की थी, हे कौशिक! आप श्री राम के भक्त हैं। आप हमारे ऊपर भी कृपा करो।।६३।।

**वल्मीकसंभूतमुनेकवित्वाद-**
**तिप्रियस्त्वं भरताग्रजस्य।**
**संगीतविद्याचतुरो[१]ऽसिविष्णो-**
**स्त्वं पार्षदोनारदरागपात्रम्।।६४।।**

**व्याख्या**–हे वल्मीकिसंभूतमुने! कवित्वात् त्वं भरताग्रजस्य रामस्य अतिप्रियः। हे नारद! त्वं संगीतविद्याचतुरोऽसि, त्वं विष्णोः पार्षदः नारदः अतिरागपात्रम्। उपजातिः छन्दः।।६४।।

**भावानुवाद**–हे वल्मीकि से उत्पन्न मुने! आप कवि होने के कारण श्री राम के परमप्रिय हैं, हे नारद! आप संगीत विद्या में चतुर हैं तथा श्री विष्णु के पार्षद बनकर उनके अनुराग के पात्र हैं। यहाँ उपजाति छन्द है।।।६४।।

---

१. (चतुरोऽसि) मूले।

सनकसनंदनसनातनश्रीसनत्कुमाराख्य ।
जगदुपकृतिकार्यपराःसर्वे ऋणुतास्मदुक्तिमतिकृपणा[1]म्।।६५।।

व्याख्या–सनकः सनन्दनः सनातनः सनत्कुमारश्च जगत्कल्याणपराः सन्ति। वयं सर्वे तस्य अधमर्णाः। उपजातिः छन्दः।।६५।।

भावानुवाद–हे सनक! सनन्दन! सनातन तथा सनत्कुमार आप सब संसार के कल्याण में संलग्न हैं। हम सब आपके ऋणी हैं। कृपया मेरी आकांक्षा है कि मुझे प्रभु तक अवश्य पहुँचा दें। यहाँ उपजाति छन्द है।।६५।।

पातकैरपिसंपन्नं प्रपन्नं शरणार्थिन[2]म्।
मां श्रीरामपदद्वंद्वे निक्षिपंतु शुभाप्तये।।६६।।

व्याख्या–पातकैः पापैः सम्पन्नं प्रपन्नं शरणार्थिनं मां श्री रामचन्द्रस्य पदद्वन्द्वे पादयुगले शुभाप्तये निःश्रेसाय निक्षिपन्तु। अनुष्टुप छन्दः।।६६।।

भावानुवाद–मैं पापों से पूर्ण हूँ। मैं शरणार्थी बनकर राम के पास आया हूँ। श्री राम के चरणयुगल में मुझे (सभी) देवगण मुक्ति प्राप्ति के लिए प्रदान कर दें। यहाँ अनुष्टुप् छन्द है।।६६।।

नीलं नलं सुषेणं च मैंदं च शरभं तथा।
द्विविदं चंदनं चाथगवाक्षं कपिपुंगवम्।।६७।।

व्याख्या–नीलं नलं सुषेणं मैंदं च शरभं तथा च द्विविदं गवाक्षं कपिपुंगवं च प्रणमामि।।६७।।

भावानुवाद–मैं नील, नल, सुषेण, मैंद, शरभ, द्विविद, चन्दन, गवाक्ष

---

१. (कृपणां ।।) मूले।
२. (शरणार्थिनं ।।) मूले।
नोट–पुनरुक्तत्वाच्ल्छोलकस्य एकस्यैव व्याख्या विधीयते।

तथा कपिश्रेष्ठ हनूमान् को प्रणाम करता हूँ। यह श्लोक दो बार लिखा गया है और यहाँ राम के सहायक जनों की चर्चा की गयी है।।६७।।

किरीटं कुंडलद्वंद्वं श्रीवत्सं च सकौस्तु[1]भम्।
शंखं चक्रं गदां पद्मं प्रणतो[2]ऽस्मीष्टसिद्धये।।६८।।

व्याख्या–भगवतः रामचन्द्रस्य किरीटं कुण्डलद्वयं, श्रीवत्सं कौस्तुभमणिं, शंखं, चक्रं, गदां, पद्मं च अभीष्टसिद्धये प्रणतोऽस्मि। अत्र आभूषणानां आयूधानाञ्च प्रणतिः कृपा दृश्यते।।६८।।

भावानुवाद–मैं अपनी अभीष्ट सिद्धि के लिए श्री राम के किरीट, दोनों कुण्डल, श्रीवत्स, कौस्तुभमणि, शंख, चक्र, गदा, पद्म को प्रणाम करता हूँ।।६८।।

कवंधं चा[3]थसोमं च ह्यापं चैवानिलं नल[4]म्।
प्रत्यूषं च प्रभासं च श्री रामासक्तचेत[5]सम्।।६९।।

व्याख्या–अहं कवंधं, सोमं, अनिलं, नलं, प्रभासं च तथा रामासक्तचेतसम् प्रणमामि।।६९।।

भावानुवाद–मैं कबन्ध, चन्द्रमा, वायु, नल, सोमादि, प्रभासक्षेत्र तथा राम में आसक्त चित्तवालों को प्रणाम करता हूँ।।६९।।

---

१. (कौस्तुभं ।।) मूले।
२. (प्रणतोस्मी) मूले।
३. कवंधरंच) मूले।
४. (नलं ।।) मूले।
५. (चेतसं ।।) मूले।

पीठभद्रं च शंभुं च गिरीशाजैकपादकौ।
अहिर्बुध्न्यं पिनाकीशं भुवनेशं कपालिन[१]म्।।७०।।

व्याख्या–पीठभद्रं, शंभुं, गिरीशं, अहिर्बुध्न्यं, पिनाकीशं भुवनेशं कपानिलं वन्दे।।७०।।

भावानुवाद–मैं पीठभद्र, शंभु, गिरिजा, अहिर्बुध्न्य पिनाकी शिव तथा तीनों लोकों के स्वामी (राम) को प्रणाम करता हूँ।।७०।।

दिक्पतिं स्थाणु[२]भर्गं च श्री रामासक्तमानस[३]म्।
तत्कृपावीक्षणोद्भूतकौतुकप्लावितांतर[४]म् ।।७१।।

व्याख्या–दिक्पतिं स्थाणुं शिवं रामासक्तमानसम् वीक्ष्य कृपां प्राप्य प्लावितोऽस्मि।।७१।।

भावानुवाद–दिशाओं के पति को, शिव को राम में आसक्त चित्त वालों का तथा राम की कृपा पाने वालों को प्रणाम करता हूँ।।७१।।

अरुणं सूर्यसहितं वेदांगं भानुसंयुत[५]म्।
इन्द्रं रविं गभस्तिं च यमं च स्वर्णरित[६]सम्।।७२।।

व्याख्या–अरुणं सूर्यं वेदांगं (षडङ्गम्) इन्द्रं रविं गभस्तिं यमं च सस्वर्ण रेतं (नौमि)।।

१. (पालिनं ।।) मूले।
२. (स्थाणुभार्गैंच) मूले।
३. (सं ।।) मूले।
४. (तरं ।।) मूले।
५. (संयुतं ।।) मूले।
६. (सं ।।) मूले।

**भावानुवाद**–अरुण, सूर्य, वेदांग, इन्द्र, रवि तथा यमादि सभी को प्रणाम करता हूँ।।७२।।

**दिवाकरं मित्रसुतं विभुं धातारमेव च।**
**प्रणम्य प्रार्थये रामो वरदाता ममास्त्विति।।७३।।**

**व्याख्या**–दिवाकरं सूर्यं, सूर्यपुत्रं शनिं, विभुं धातारं ब्रह्माणं च प्रार्थये यत् श्री रामो मम कृते वरदातास्त्विति ते प्रयासं कुर्वन्तु।।७३।।

**भावानुवाद**–दिवाकर, सूर्य के पुत्र शनिदेव, चन्द्रमा, विधाता (ब्रह्मा) को प्रणाम करता हूँ कि मेरे श्री राम मेरे वरदाता रहें।।७३।।

**इंद्रमग्निं यमं रक्षो[1]ऽधिपतिं जलनायक[2]म्।**
**वायुं सोमं महेशानं नित्यं श्री रामसेवक[3]म्।।७४।।**

**व्याख्या**–इन्द्रम्, अग्निम्, यमम्, वरुणम्, वायुम्, सोमम्, महेशम् तथा नित्यं रामसेवकं प्रणमामि। देवाऽपि रामस्य सेवकाः सन्ति।।७४।।

**भावानुवाद**–मैं इन्द्र, अग्नि, यम, रक्षोऽधिपति, जल के नायक वरुण, वायु, सोम तथा महेश को नित्य प्रणाम करता हूँ, जो राम के सेवक हैं।।७४।।

**पूर्वेशानदिशोर्मध्येब्रह्माणं लोकनाय[4]कम्।**
**नैर्ऋत्यपश्चिमांतस्थं विभुं वंदे शुभाप्तये।।७५।।**

**व्याख्या**–पूर्वेशानदिशोर्मध्ये ब्रह्माणं लोकनायकं नैर्ऋत्यं पश्चिमांस्त्थं दैवं शुभप्राप्तये वन्दे।।७५।।

---

१. (रक्षोधि) मूले।
२. (कं ।।) मूले।
३. (कं ।।) मूले।
४. (कं ।।) मूले।

**भावानुवाद**–पूर्व और ईशान के मध्य में ब्रह्मा को, लोकनायक नैर्ऋत्य को पश्चिम दिशा के देवता को शुभ प्राप्ति के लिए मैं प्रणाम करता हूँ।।७५।।

**वज्रं शक्तिं च द्वंद्वं च खड्गं पाशं तथा ध्वज[1]म्।**
**गदां शूलं च कमलं चक्रं नौमीश्वराश्रय[2]म्।।७६।।**

**व्याख्या**–अहं, वज्रं, शक्तिं, दण्डं, खड्गं, पाशं, गदां, शूलं, कमलं, चक्रं च ईश्वराश्रयम् रामाश्रयं नौमि। एते सर्वेरामाश्रयाः सन्ति।।७६।।

**भावानुवाद**–मैं वज्र, शक्ति, दण्ड, खड्ग, पाश, गदा, शूल, कमल, चक्र तथा राम पट आश्रितों को प्रणाम करता हूँ।।७६।।

**श्री रामपार्षदान् सर्वान् नागास्तद्वारपालकान्।**
**प्रार्थये रघुनाथे मे सर्वदा चित्तमस्त्विति।।७७।।**

**व्याख्या**–अहं श्री रामपार्षदान् सर्वान् नागान् द्वारपालान् च प्रार्थये यत् तथा कुर्युः येन मम चित्ते रामे अस्त्विति।।७७।।

**भावानुवाद**–मैं श्री राम के पार्षदों को, नागों को, द्वारपालों को प्रार्थना करता हूँ कि मेरा श्री राम में सर्वदा चित्त लगा रहे।।७७।।

**दशभिरावरणैरभिसंवृतो[3]-**
**ऽभिमुखतामुपयातु ममेश्वरः।**
**तपनसंभवभूपविभूषणं**
**रघुपतिः शरणागतवत्सलः।।७८।।**

---

१. (ध्वजं ।।) मूले।
२. (यं ।।) मूले।
३. (तोभि) मूले।

**व्याख्या**–मम ईश्वरो रामः दशभिः आवरणैः युक्तः मम सम्मुखतां प्राप्नोतु। श्री रामः शरणागतवत्सलः तपनसंभव भूपविभूषणं सूर्यवंशोत्पन्न अलङ्कारस्वरूपः वर्तते।।७८।।

**भावानुवाद**–मेरे ईश्वर श्रीराम से दश आवरणों से युक्त होकर प्रार्थना करता हूँ जो सूर्यवंश के अलङ्काररूप श्री रघुपति शरणागतवत्सल हैं।।७८।।

**देव त्वं जयराम राघव जय श्री सूर्यवशोदय-**
**प्रायः पालय लालय त्रिभुवनस्वायत्तमायप्रभो।**
**इत्थंप्रार्थनवाक्परैः सुरवरैस्तद्वन्नरैः किन्नरै-**
**र्धूपप्रोद्भवधूमभोगसमये रामःस्तुतः पातु मा[1]म्।।७९।।**

**व्याख्या**–देव त्वं जय राम राघव जय श्री सूर्यवंशोद्भवः, पालय, लालय, हे त्रिभुवनप्रभो ! इत्थं प्रार्थनवाक्यैः सुरवरैः, नरैः, किन्नरैः धूम-भोग-समये श्री रामः स्तुतः पातु माम्।।७९।।

**भावानुवाद**–हे देव ! आप जय राम, राघव जय, श्री सूर्यवंशोदय प्रायः तीनों भुवन के लालन-पान हमेशा करने वाले–इस प्रकार के वाक्यों से देवताओं, मनुष्यों, किन्नरों द्वारा प्रार्थित होते हैं, ऐसे राम मेरी रक्षा करें।।७९।।

**दिक्प्रांतभ्रांतभेरीमुरजमुखमहावाद्यमाद्यन्निनादैः**
**कर्पूरानर्घ्यरत्नामलहृदयमहःसंघनीराज्यमानः।**
**उत्तार्योत्तार्यमुष्टीश्चिकुरभरपरिक्षिप्तपीताक्षते मे**
**चेतो रामे सरामे निवसतु सततं स्मेरवक्त्रारविंदे।।८०।।**

**व्याख्या**–भेरीमुरजप्रमुखवाद्यैः निनादैः दिक्प्रान्त-भ्रान्तः, कर्पूरानर्घ्यंरत्नं, नीराज्यमानः, उत्तार्योत्तार्यमुष्टीश्चिकुरभरपरिक्षिप्तः मे चेतः श्री रामे निवसतु, स्मेर वक्त्रारविन्दे मम हृदये वसतु।।८०।।

---

१. (मां ।।) मूले।

भावानुवाद–भेरी, मुरज प्रभृति वाद्य से तथा शब्दों से दिशाएँ गुंजित हो गयी हैं, कर्पूर, अर्घ्य, निराजन से पूजित, मुष्टी उठाकर, केश को उठाकर, पीताम्बरधारी श्री राम के हँसते हुए मुख में मेरा चित्त बास करे। यहाँ पद श्री राम के बाल–चरित्र का वर्णन है।।८०।।

**सौवर्णामत्रनिष्ठामृतमयविविधान्नान्यवाग्गोचराणि**
**प्रीत्यास्वाद्यार्थितानि प्रियविबुधगणांश्चाशयन्पंक्तिभोक्तृन्।**
**जानक्यावीज्यमानः स्मितमधुरमुखश्चिंतनीयोऽनुरक्तै-**
**र्भुंक्ते श्री रामचन्द्रो व्यवधिपटतटे सच्चिदानंदसांद्रः।।८१।।**

व्याख्या–सौवर्णपात्रे विविधान्यन्नानि विबुधगणाः भुंजन्ति स्म। तत्र जानक्या बीज्यमानः स्मित मधुरमुखः श्री रामचन्द्रः सच्चिदानन्दमूर्त्ति भुंक्ते।।८१।।

भावानुवाद–देवतालोग सुवर्णपात्र में विभिन्न अन्नों का भोजन करते हैं, जानकीद्वारा पंखा झलते हुए हवा से प्रसन्न श्री रामचन्द्र भोजन करते हुए सच्चिदानन्द मूर्त्ति शोभायमान है।।८१।।

**शीतं सुगंधि मधुरं प्रणयिप्रणीतं**
**पीतंजलं रघुवरेण मुहुर्मुहुर्यत्।**
**नीतं समूलकमघांकुरसंघजालं**
**वीतं पुनः स मुदये न तु तेन दाहः।।८२।।**

व्याख्या–प्रणयिजनैः प्रणीतं सुगन्धिमधुरं जलं रघुवरेण मुहुर्मुहुः वारम्वारं पीतम्। तस्मात् समूलकं सर्वेषां पापं नीतम् एवं च समुदये तेन दाहः नाभूत्।।८२।।

भावानुवाद–शीतल, सुगन्धित मधुर, प्रेमियों द्वारा निर्मित जल को पीकर, रघुवर ने पुनः पुनः किये गये पापों को समूल नष्ट कर डाला, उससे आनन्दित होकर ताप भी नष्ट हो गया।।८२।।

**फलानि राघवप्रीत्यै यान्यानीतान्यमायया।**
**मया तानि फलंत्युच्चैश्चित्रं सर्वमनोरथान्।।८३।।**

**व्याख्या**–यानि फलानि राघवप्रीत्यै समनीतानि तेभ्यः सर्वेषां मनोरथाः पूर्तिं गता इति आश्चर्यम्।।८३।।

**भावानुवाद**–निश्छलता पूर्वक जो फल राघव की प्रीति के लिए लाया, उससे मेरे सभी मनोरथ पूर्ण हो रहे हैं यह आश्चर्य है।।८३।।

**नित्यतृप्तो[१]ऽपि मत्तृप्तिं भक्तिभावेन मन्यसे।**
**धन्यता जन्यते तेन चित्तवृत्तेः स्वचिंतनात्।।८४।।**

**व्याख्या**–नित्य तृप्तोऽपि श्री रामः भक्तिवशात् तृप्तिं प्रकटयति। चित्तवृत्ते स्वचिंतनात् तेन धन्यता जन्यते।।८४।।

**भावानुवाद**–नित्य तृप्त श्रीराम को मेरी भक्ति समर्पित है। उस चिन्तन से चित्तवृत्ति की धन्यता द्योतित होती है।।८४।।

**गांडूषिकंजलमथाचमनीयमुच्चै-**
**रुद्वर्तनं च करयोर्मलयोद्भवेन।**
**दत्त्वादशास्यरिपवेविनिवेदयामि**
**तांबूलमुन्नतगुणं घनसारमिश्र[२]म्।।८५।।**

**व्याख्या**–भोजनानन्तरं गाण्डूषिकं जलम् आचमनीयं कृतं करयोः गलयोद्भवेन उद्वर्तनं कृतम्। दशास्य रिपवे रामचन्द्राय ताम्बूलं घनसारमिश्रं दत्त्वा विनिवेदयामि।।८५।।

**भावानुवाद**–मैं भगवान् को हाथ धोने के लिए जल, आचमनीय देकर,

१. (प्तोपि) मूले।
२. (मिश्रं ।।) मूले।

दोनों हाथों से शरीर के मल को निकालकर दशास्य (दशमुख) रावण के शत्रु राम से निवेदन है कि वे कर्पूर से युक्त ताम्बूल ग्रहण करें।।८५।।

अद्वितीयमपिसद्वितीयतां
यत्प्रयाति मुकुरे निरीक्षितम्।
तन्मुखं मम सदास्तु संमुखं
राघवस्य मधुराधरप्रभम्[1]।।८६।।

**व्याख्या**–अद्वितीयमपि मुखं मुकुरे दर्पणे निरीक्षितं ईक्षितं द्वितीयतां अपरतां याति। राघवस्य श्री रामचन्द्रस्य तन्मुखं सदा मम सन्मुखं मधुराधरप्रभं भवतु।।८६।।

**भावानुवाद**–एक ही मुख दर्पण में देखने पर दो हो जाते हैं। राघव का वह मुख सदा मेरे सम्मुख मधुर अधर वाला हो।।८६।।

गंधर्वोद्गीतनृत्यत्सुरवर वनितालास्य संसक्तसंस-
द्देवाधीशानिमेषेक्षणजनितमनोविस्मयस्मेरवक्त्रः।
स्व[2]च्छछत्राछवालव्यजनकरनराकारशेषानुयातः
कांतः क्षीराब्धिजाया निवसतु हृदये रामनामाहरिर्मे।।८७।।

**व्याख्या**–श्री रामस्य संसदि गन्धर्वाणां नृत्यं सुरवर वनितालास्य युक्तमासीत्। श्री रामचन्द्रस्य तदानीं स्मेरवक्त्रमासीत्। क्षीराब्धिजायायाः कान्तः रामनामा हरिः मे हृदये निवसतु।।८७।।

**भावानुवाद**–श्री राम की सभा में गन्धर्वों का नृत्य, सुर विनताओं द्वारा लास्य होता रहता है। उस समय श्री रामचन्द्र का मुख प्रसन्न रहता है इस प्रकार क्षीरसमुद्र तनया लक्ष्मी के कान्त हरि (श्री राम) मेरे हृदय में बास करें।।८७।।

---

१. (प्रभं ।।) मूले।
२. (स्वछ) मूले।

श्री रामप्रचुरप्रदक्षिणपरिभ्रांत्यायुतेमय्ययं
कालभ्रांतिमुपैतिपापनिचयःपूण्योच्चयः स्वभ्रम[1]म्।
स्वीयस्वीयपदार्थिनोभ्रममीदेवास्तुतत्पार्षदाः
सर्वे बंधुजन भ्रमं मुनिवरोजीवद्विमुक्तिभ्रम[2]म्।।८८।।

व्याख्या—श्री रामचन्द्रस्य प्रचुरप्रदक्षिणकरणे भ्रान्त्यायुते मयि पापनिचयः कालभ्रान्तिमुपैति तथा पुण्योच्चयो भवति। सर्वे देवाः तत्पार्षदाः स्वीय स्वीय पदार्थिनो भवन्ति, सर्वे बन्धुजनाः भ्रमं कुर्वन्ति, मुनिवरा आजीवद्विमुक्तिं लभन्ते जीवन्मुक्ताः भवन्त इति भावः।।८८।।

भावानुवाद—श्री राम के प्रचुर प्रदक्षिणा करने से मैं भ्रान्ति से युक्त हो जाता हूँ तब मुझमें स्थित पापसमूह काल की भ्रान्ति में पड़ जाते हैं तथा पुण्योच्चय होता है। सभी देवता एवं उनके पार्षद अपने-अपने पद के लिए उत्सुक होते हैं। सभी बन्धुजन श्रम करते हैं मुनिलोग जीवन्मुक्त हो जाते हैं।।८८।।

रे रे ब्रह्मवधादिपापगिरयो निःसंख्यजन्मार्जिताः
श्री रामांघ्रिपराङ्मुखंनृपधियातीतं च वेगान्विताः।
नोचेत्तत्प्रचुरप्रदक्षिणपरिक्षुस्मक्षितिप्रोद्भव-
द्भूरिक्षुद्ररजःकणाशनिकृतो नाशो[3]ऽस्तु वः शाश्वतः।।८९।।

व्याख्या—मनुष्याणां जीवने बहूनि पापानि भवन्ति अतः भक्तकविर्लिखति— रे रे ब्रह्मवधादि जन्य पापगिरयः जन्मार्जिताः असंख्याकाः भवन्ति। तत्र नृपधिया राज्यादिकार्यलग्ने श्री रामाघ्रिपराङ्मुखं अतीतं च वेगान्विताः पापगिरयः। नो चेत् तत् प्रचुरप्रदक्षिण विधिना भूरिरजः कणानिकृतो नाशोऽस्ति वः शाश्वतः।।८९।।

---

१. (भ्रमं ।।) मूले।
२. (भ्रमं ।।) मूले।
३. (शोस्ति) मूले।

**भावानुवाद**–हे ब्रह्मवधादि पाप रूप पहाड़! आप असंख्य हो जाते हैं। भगवान् (राम) की प्रचुर प्रदक्षिणा से उन पापों का नाश हो जाता है। प्रदक्षिणा के अभाव में आप सब का नाश निश्चित है।।८९।।

**शरणागतवज्रपंजरेरघुनाथे स्थिरतांगतस्यते।**
**वदमानसकीर! कुत्र वा भविता कालविडालतो भयम्।।९०।।**

**व्याख्या**–शरणागतानां कृते भगवतः वज्रपंजरस्थिरे ते रघुनाथस्थिरतां गजस्य, हे मानस कीर! वद कुत्र वा तव कालविडालस्य भीतिः?।।९०।।

**भावानुवाद**–शरणागतों के लिए भगवान् का वज्रपञ्जर स्थिर है। जब लोग रघुनाथ में स्थिरता प्राप्त करते हैं अथवा कर लेते हैं तो हे मानसकीर! कहो कहाँ तुम्हारा कालविडाल का भय है यानि मृत्यु का भय है? (अतः) तुम भय रहित हो जाओ।।९०।।

**अंब कंबलिनं प्राप्यस्पृहेविषये[१]मेऽधम।**
**नवेत्सिवत्सेबद्धासि श्री रामचरणे मया।।९१।।**

**व्याख्या**–अम्ब! कम्बलिनं प्राप्य मेऽधम विषये स्पृहे कथम्? रे स्पृहे! किं त्वं न जानासि यत् त्वं मया रामचरणे बद्धासि।।९१।।

**भावानुवाद**–हे अम्बे! स्पृहे। कम्बलियों को प्राप्त करके हे अधम विषय! हे वत्से तुम नहीं जानती कि मैंने अपने को श्री राम के चरण के साथ बाँध दिया है।।९१।।

**वंदे पदे तव मुदे जगदेकनाथ**
**संदेशतः पितुरुपात्तदूरंतखेदे।**

---

१. (विषयमेविम) मूले सन्देहयुक्तशब्दः।

**मंदेह देहदलनाचयमौलिरत्न-**
**किं देहिनां शरणमस्ति ततो[1]ऽन्यदत्र।।९२।।**

**व्याख्या**–हे जगदेकनाथ! वन्दे तव पदद्वन्द्वं मुदे सुखाय, पितुः दशरथस्य सन्देशतः दुरन्तखेदेऽपि देहदलानामन्दा इह, यतो हि मौलिरत्नं वर्तते राघवः, देहिनां कृते ततोऽन्यत्र किमपि शरणं नास्ति।।९२।।

**भावानुवाद**–हे जगदेकनाथ! संसार के एक मात्र स्वामी आपको नमस्कार है। आपने पिता के सन्देश को प्राप्त करके वन जाने के लिए खेद नहीं किया, हे मौलिरत्न! इस दैहिक कष्ट को भूल जायें। क्या राम से अन्यत्र देहियों का अन्यत्र शरण है अर्थात् एक मात्र राम ही सबके शरण हैं।।९२।।

**तन्मे सदास्तु शरणं करणं शुभानां**
**श्री रामचन्द्रचरणद्वितयं भयेषु।**
**कैलासशैलशिखरे शिशि[2]रांशुमौलि-**
**र्यच्छीलयन्विषयभयं जगतो जहार।।९३।।**

**व्याख्या**–श्री रामचन्द्रचरणद्वयस्य शरणं शुभानां करणं वर्तते। अतः मम सदा तत्र चरणे शरणं भवतु। कैलाशशैलशिखरे शिशुरांशुः चन्द्रः तस्य मौलिः जगतः विषभयं जहार।।९३।।

**भावानुवाद**–श्री रामचन्द्र के दोनों चरणकमलों में भय के समय मेरा हमेशा के लिए शरण हो, वही शुभों का करण है। कैलाश शैलशिखर पर अस्ताचल का अंशु मौलि जिसने संसार के विषभय को दूर किया ।।९३।।

---

१. (ततोन्यदत्र) मूले।
२. (अस्पष्टपदमेतत्) मूले।

तस्मै नमः कलकदर्थितलोकशोको-
द्रेकाऽपकारकुशलाय कृपा[1]खिलाय।
श्री रामचन्द्रभवते यतते यदीय-
नामात्मानुमोदनविधौ विधुखंडमौलिः।।९४।।

**व्याख्या**–तस्मै नमः कलकदर्थितलोकशोकोद्रेकापकारकुशलाय कृपाखिलाय श्री रामचन्द्र! भवते यतते यदीय नाम आत्मानुमोदनविधौ विधुखण्डमौलिः।।९४।।

**भावानुवाद**–उस रामचन्द्र को नमस्कार है, जो लोगों के शोक के नाश में कुशल तथा कृपारूप भगवान्! हे रामचन्द्र! आपके लिए जिसका नाम यत्नशील रहता है, आत्मानुमोदन के लिए आप चन्द्रखण्ड मौलि हैं।।९४।।

नमः समस्तदैतेयदर्पसर्पगरुत्मते।
श्री रामाय लस्मायमायापनयधीमते।।९५।।

**व्याख्या**–सर्वेषां दैतेय दर्पसर्पाणां कृते गरुत्मते रामाय नमः। सर्पाणां कृते गरुडः शत्रुः भवति। श्री रामाय धीमते लसन्मायया अपनय।।९५।।

**भावानुवाद**–सभी दैत्यरूप सर्प के लिए गुरुड़ के समान श्री राम हैं। वे बुद्धिमान्, माया को दूर करें।।९५।।

नमः समस्तसंसारधर[2]त्विध्वंसभानवे।
जगदानंदकंदाय दशस्यंदनसूनवे।।९६।।

**व्याख्या**–समस्त संसारस्य अर्त्रे विध्वंसकाय भानुकुलोत्पन्नाय भानुरूपाय, जगदानन्दकन्दाय दशस्यन्दनः दशरथः तस्य सूनवे पुत्राय नमः।।९६।।

**भावानुवाद**–समस्त संसार के संरक्षक तथा ध्वंस करने वाले सूर्य

---

१. (कृपाविलाय) मूले।
२. (घरंत) इति मूले।

(सूर्यकुलोत्पन्न राम) जगदानन्द को अर्थात् दशरथनन्दन राम को नमस्कार है।।९६।।

नमः श्रीरघुनाथायभक्तैकासक्तचेतसे।
करुणामंथरायांगकटाक्षक्षपितांहसे।।९७।।

व्याख्या–भक्तैकासक्तचेतसे श्रीरघुनाथाय नमः। करुणामंथरायांग कटाक्षक्षपितांहसे।।९७।।

भावानुवाद–श्री रघुनाथ जी को नमस्कार है जो भक्त वत्सल हैं। करुणासागर के कटाक्ष मात्र से समस्त पाप नष्ट करते हैं।।९७।।

नमो दशरथानंदकंदायानंदमूर्त्तये।
राघवायकलंकोन राकेंदुसमकीर्त्तये।।९८।।

व्याख्या–दशरथानन्दाय, आनन्दकन्दाय, आनन्दमूर्त्तये च नमः। कलंकेन राघवाय राकेन्दुसमकीर्त्तये।।९८।।

भावानुवाद–दशरथ के अनन्दकन्द पुत्र श्री राम आनन्दमूर्त्ति हैं। उन्हें नमस्कार है, उनमें कलंक का लेशमात्र भी नहीं है।।९८।।

अवाच्योक्तेःपापं यदभवदकार्यस्य च कृते-
रभोज्यान्नादानादथपुनरगम्याभिगमनात्।
अनर्थानांसंगाद्बुधजनविरागात्तदखिलं-
लयं नेतुं सीतापतिमुपगतो[1]ऽस्मीह शरणम्।।९९।।

व्याख्या–अवाच्यवचनात् अकार्यकरणात् यत् पापं भवति, अभोज्यान्नादानात्, अगम्यास्त्रीगमनात्, अनर्थानां संगात् बुधजनेभ्यः विरागात् यदखिलं पापं जायते तल्लयं नेतुं अहं सीतापतिं रघुनाथमुपागतोऽस्मि शरणम्।।९९।।

---

१. (-तोस्मि) मूले।

**भावानुवाद**–अवाच्य बोलने से जो पाप होता है, अकार्य करने से जो पाप होता है, अभोज्यान्न का दान लेकर जो पाप होता है, अगम्या स्त्री के समागम से जो पाप होता है, अनर्थ करने वालों के संग होने से जो पाप होता है, बुधजन से विरक्त होने पर जो पाप होता है, उन सब पापों को दूर करने के लिए मैं सीतापति श्री राम के शरण को प्राप्त करता हूँ।।९९।।

**श्रौतस्मार्तागमोक्तान्यतिकठिनतराणीहकर्माणि तेषां-**
**कालेकालोविधानादविहितरुचिरानेककार्याविधानात्।**
**आनीतः पारवश्यंसफलयतिनृणां कामनांभोदयेयं-**
**कृत्यासक्तेनिषिद्धं रचयति मयियारामसा[1]तेऽनुकम्पा।।१००।।**

**व्याख्या**–श्रौत–स्मार्त–आगमोक्तानि कर्मणि कठिनतराणि भवन्ति। वैदिकानां स्मार्तानां आगमोक्तानां शक्तानां शैवानां वा कर्माणि दुष्कराणि भवन्ति, काले–काले तेषां वचनेषु अविहितरुचिरानेक कार्याविधानात्। अतः सफलयतीनां नृणां पारवश्यं आनीतः कृत्यासक्तेः निषिद्धं रचयति मयि रामस्य अनुकम्पा।।१००।।

**भावानुवाद**–श्रौत–स्मार्त्त तथा आगमोक्त कर्म बहुत कठिन कर्म हैं, उनका समय–समय पर उनके अविहित रुचिर कार्य का विधान है, जो सफल संन्यासियों तथा लोगों के लिए पारवश्यं लाता है। राम की अनुकम्पा उन सब कठिनाइयों को दूर करती है।।१००।।

**प्रवर्त्तको[2]ऽसि बुद्धीनां यदि राम त्वमेव मे।**
**ततस्त्वदाज्ञावशगं दुर्बुद्धिमपि मामव।।१०१।।**

**व्याख्या**–हे राम! यदि मम बुद्धीनां त्वमेव प्रवर्त्तकोऽसि तदा मम दुर्बुद्धिमपि अव रक्ष क्षमस्व। तवाज्ञावशगं सर्वं वर्तते।।

**भावानुवाद**–हे राम! आप बुद्धिमानों को ज्ञान प्रदान करते हैं तो आप ही मेरे अज्ञान जन्य दुर्बुद्धि से भी मेरी रक्षा करें।।१०१।।

---

१. (सातेनुकम्पा) मूले।
२. (कोसि) मूले।

भक्त्या केवालयैव तुष्यतिभवान् नापेक्षतेऽन्यत्किम-
प्येवंवाक्यमुपैति भक्तमुखतस्तत्रास्म्यहं सादरः।
कावास्तेगरुडेह चुंबति फणीशानेगजेंद्रेमति-
धर्मैर्मामधिकृत्यराघव तव स्नेहास्पदं यद्भवेत्।।१०२।।

**व्याख्या**–भक्त्या कैवलयैव भवान् तुष्टति नापेक्षतेऽन्यकमपि, एवं वाक्यं यदा भक्तानां मुखेभ्य उदेति तत्रापि–अहं सादरः का वास्ते विशेषः यत् फणीशः गरुडं चुंबति, गजेन्द्रेऽपि तस्य रक्षामतिः अभूत्। अतः हे राम! धर्मैः मां स्नेहास्पदं यद्भवेत् तत्कुरु।।१०२।।

**भावानुवाद**–हे भगवान्! केवल भक्ति से ही आप प्रसन्न होते हैं, आपको और कुछ नहीं चाहिए, ऐसा भक्त लोगों के मुख से सुना जाता है। आप की कृपा से गरुड को सर्पराज चुम्बन करते हैं, गजेन्द्र और सिंह में स्नेह होता है। ये राघव! आपके स्नेह से ही सब कुछ होता है।।१०२।।

उल्लंघ्यापिविभो स्वधर्ममुचितामुत्सर्गगर्हाजने
हित्वा पापभयं निरस्य च निजं वर्णाश्रमोत्थंमदम्[१]।
आज्ञां केवलमेवपूर्वसुकृतस्यादायमूर्द्ध्ना मया-
त्वं निःशेषनृपाधिनाथ मनसा सीतापतेसम्मितः।।१०३।।

**व्याख्या**–हे विभो! त्वं स्वधर्मं उचितं आदाने-प्रदाने पापभयं निरस्य वर्णाश्रमोत्थं मदं कृत्वा, पूर्वसुकृतस्य आज्ञां मूर्द्ध्ना आदाय हे निःशेषनृपाधिनाथ! हे सर्वेषां नाथ! हे सीतापते! मनसा सम्मितो भवतु।।१०३।।

**भावानुवाद**–हे विभो! आपने उचित धर्म उत्सर्ग और गर्ह मानकर धर्म का उल्लंघन करके भी पापभय को छोड़कर वर्णाश्रम से उत्पन्न मद को त्यागा। पूर्व के सुकृतियों की आज्ञा को मैंने स्वीकारा। हे राजाओं के नाथ! सीता के पति! आप जो उचित हो करें।।१०३।।

---

१. (मदं ।।) मूले।

कांतासंगेकुणपधिषणा वैरिव[१]र्गोऽप्युपेक्ष्यो-
निदांवृंदेस्तुतिमतिरथान्यस्यवृत्ते विरागः।
दुःखे पापक्षतिमति रसाब्ध्[२]वं ततो मूर्छितत्वं,
नित्यं भूयादिति रघुपते प्रार्थये भूप एव।।१०४।।

**व्याख्या**—हे रघुपते! अहं प्रार्थये यत् मम कान्तासंगे बुद्धिर्भवतु, बैरिवर्गो मम उपेक्ष्यो भवतु, निन्दायां संस्तुतौ वा अथवा अन्यस्य परस्य वृत्ते मम विरागो भवतु। दुःखे पापक्षतिमतिः मम यथा नित्यं स्यात् तथा कुरु।।१०४।।

**भावानुवाद**—हे राघवेन्द्र! मैं प्रार्थना करता हूँ कि अपनी प्रिय कान्ता के साथ अच्छी बुद्धि रहे, मेरे वैरी मुझसे उपेक्षित रहें, मेरी निन्दा करने वाले या प्रशंसा करने वालों से मुझे विराग हो जाय। मुझ में दुःख में पाप घटाने की मति हो, गलत कार्य में मूर्छा आ जाय, ऐसा प्रतिदिन होता रहे, यही मेरी इच्छा है।।१०४।।

कामं कांतां जनयतु मयित्वत्पदोरेव सेवां-
क्रोधो वैरं रचयतु भवतः पूजने न्यूनकाले।
लोभः प्रायः प्रथयतु तवस्मेदभास्ये[३]त रामे
स्यादन्यस्मात्कवनरकवद्वारमेतत्त्रयं मे।।१०५।।

**व्याख्या**—हे भगवन्! मयि त्वत्पादारविन्दे कामं सेवाभावं भवतु। तव पूजनसमये वैरं प्रतिक्रधो भवतु तथा लोभः प्रायः तव स्मेराननस्य दर्शने भवतु। कामः क्रोधो लोभः एतत् त्रयं वैरं वर्तते। कामः क्रोधः तथा लोभः त्रिविधं नरकस्य द्वारं वर्तते इति गीतायाः वचनम्।।१०५।।

**भावानुवाद**—कामना आपके पैर की सेवा में रहे, क्रोध या वैर भाव आप की पूजा के समय कुछ समय के लिए न हो, लोभ भगवान् राम के मुख कमल

---

१. (वैरिगर्वोप्युपेक्ष्यो) मूले।
२. (साब्ध्यं) मूले।
३. (स्येंत) मूले।

देखने का हो। ये काम, क्रोध और लोभ नरक के द्वार हैं। अतः इसका प्रभाव न हो।।१०५।।

**कामेनापि क्षिप्तमेतत्तवांघ्रिद्वंद्वे चित्तं मा पुनर्मामुपैतु।**
**भूयोभूयादेतदित्याहितं यन्नीरंक्षीरे तत्पृथक् किं ततः स्यात्।।१०६।।**

**व्याख्या**–मया सर्वं पूर्णरूपेण तवाङ्घ्रियुग्मे क्षिप्तम्। पुनः मां न प्रापयतु। पुनः भूयादित्याहितं नीरक्षीर पृथक्करणं ततः किं स्यात्?।।१०६।।

**भावानुवाद**–हे राघव! मैंने अपने को आपके चरणकमल में न्यौछावर कर दिया। मेरा पुनर्जन्म न हो ऐसी मेरी इच्छा है। पुनः नीरक्षीर विवेक द्वारा उचित और अनुचित का ज्ञान हो।।१०६।।

**कामेनापि क्षिप्तमेतत्तवांघ्रिद्वंद्वे-**
**चित्तं मामुनयीत्वकामम्।**
**वांछये तद्वर्णनीयं च किंवा-**
**देवाधीशस्याघनिर्मलत्वम्[१] ।।१०७।।**

**व्याख्या**–माया सकामं अकामं च तवाङ्घ्रिद्वन्द्वे चित्तं समर्पितम्। अहं देवाधीशस्य अघनिर्मलत्वं तद्वर्णनीयं च वाञ्छा वर्तते।।१०७।।

**भावानुवाद**–मैंने अपनी इच्छा से अपने को आपके पदकमल पर रख दिया है। मेरे चित्त में विना कारण विकार नहीं होना चाहिए। मैं चाहता हूँ कि यह सब आपके अधीन होकर निर्मल बन जाऊँ।।१०७।।

**सकामेनाथवा राम निष्कामेन मयार्पितम्[१]।**
**त्वयि चित्तं पुनर्भाभूद्विज्ञेयतांतरसम्मुखम्[२]।।१०८।।**

---

१. (त्वं ।।) मूले।

**व्याख्या**–हे नाथ मया चित्तं सकामेन अथवा निष्कामनया अर्पितम्। त्वयि स्थितं चित्तं पुनर्माभूदन्यत्सम्मुखम्।।१०८।।

**भावानुवाद**–हे राम! मैंने कामनापूर्वक अथवा निष्काम भाव से अपने चित्त को समर्पित कर दिया है, अब यह मन अन्यत्र न जाये।।१०८।।

**चेतस्त्वच्चिंचतनासक्तं चक्षुस्त्वत्प्रतिमाश्रितम्[3]।**
**वाक् त्वदीयगुणैर्बद्धा जानकीवल्लभास्तु मे।।१०९।।**

**व्याख्या**–हे राम! मम चेतः त्वच्चिन्तनासक्तं वर्तते, मम चक्षुस्त्वत्प्रीतिमाश्रितमस्ति। मम वाणी तव गुणैः बद्धाऽस्ति। हे जानकी वल्लभ! तथा भवतु।।१०९।।

**भावानुवाद**–हे राम! मेरा चित्त आपके चिन्तन में लीन रहे। मेरी आँखे आप पर टिकी हैं अथवा टिकी रहें। वाणी आपके गुणगान में बद्ध है या बद्ध रहे यही–मेरी इच्छा है।।१०९।।

**कालीवाप्यंशुमालीवा कपाली वा गजाननः।**
**मयि सम्मुखतां प्राप्ते श्री रामत्वं प्रपद्यते।।११०।।**

**व्याख्या**–काली वा भवतु, अंशुमाली वा भवतु, कपाली शिवो वा भवतु, गजाननो वा भवतु यदा मम संमुखतां अयं प्राप्स्यति तदा श्री रामत्वं प्रपद्यते। गीतायामुक्तं, 'ये यथा मां प्रपद्यन्ते तान् तथैव भजाम्यहम्' इति। अथवा– 'तुलसीमस्तक तब झुके धनुर्बाण लियो हाथ'। अत्र काली, अंशुमाली, कपालीत्यत्र अनुप्रासः यमकश्च।।११०।।

**भावानुवाद**–हे राम! काली हों या अंशुमाली, कपाली शिव हों या गजानन गणेश हों, मेरे सम्मुख आने पर सब श्री राम में बदल जाते हैं।।११०।।

---

१. (तं ।।) मूले।
२. (खं ।।) मूले।
३. (तं ।।) मूले।

**ध्यायतस्तव तद्रूपं नमतस्त्वत्पदद्वयम्[1]।**
**वदतस्तव नामानि यांतु रामदिनानि मे।।१११।।**

**व्याख्या**–हे राम! मम दिनानि तव ध्यायतः, त्वत्पदद्वयं नमतः, तथा वदतः तव नामानि अर्थात् तव नामोच्चारणे मम दिनानि यांतु गच्छन्तु।।१११।।

**भावानुवाद**–हे राम! मेरे दिन आपके रूप का ध्यान करने में, आपके पैरों का नमन करने में तथा आपके नामों के उच्चारण में लगा रहे।।१११।।

**शरणं रघुनाथो मे शरणं जनकात्मजा।**
**तावुभौ शरणं भूयो भूयांसौ शरणं मम।।११२।।**

**व्याख्या**–मम शरणं रघुनाथोऽस्ति, मम शरणं जनकपुत्री जानकी वर्तते। तावुभौ मम भूयो-भूयो शरणं स्याताम्। तौ भूयांसौ मम शरणं भूयाताम्।।११२।।

**भावानुवाद**–मेरा शरण श्री रघुनाथ हैं। मेरा शरण जनकात्मजा जानकी हैं, मैं सदा सर्वदा आप दोनों के शरण में ही रहूँ (ऐसी अभिलाषा है)।।११२।।

**अपराधसहस्त्राणांसहस्त्रमयुतंतथा ।**
**क्षंतुमर्हसि तत्सर्वं दासस्येव गृहाण माम्[2]।।११३।।**

**व्याख्या**–हे देव! मम अपराधसहस्त्रं अथवा सहस्त्रमयुतं मे अपराधान् त्वं क्षन्तुमर्हसि, मम् स्वदासं मत्वा गृहाण स्वीकुरु।।११३।।

**भावानुवाद**–मेरे सहस्त्रों, लाखों, अरबों अपराध को आप अपना दास समझ कर क्षमा कर सकते हैं। मुझे आप अपना दास ही समझें।।११३।।

**मानुषीजननीपद्वत् क्षमते बालदुर्नयम्।**
**जगज्जननि राम त्वं क्षमस्वाविनयं मम।।११४।।**

---

१. (-यं ।।) मूले।
२. (मां ।।) मूले।

**व्याख्या**–यथा इहलोके मानुषी जननी बालदुर्नयनं क्षमते तथैव हे राम! त्वं जगज्जननी सीता च मम अविनयं क्षमेयाथाम्।।११४।।

**भावानुवाद**–मनुष्य में जैसे माता वच्चे के हठ को क्षमा कर देती है, वैसे ही हे जगज्जननी जानकी! तथा हे राम! आप हमारे अविनय को (अथवा गलती को) क्षमा करें।।११४।।

**त्वं नो गोत्रं पिता माता भ्राता भर्त्ता सुहृत्तथा।**
**धनं धर्मो यशस्तोषस्त्वयत्तो[१]ऽन्यन्नास्ति मे प्रियम्[२]।।११५।।**

**व्याख्या**–हे देव राम! त्वं नो गोत्रं, त्वं मे पिता, त्व मे माता, भर्त्ता, सुहृत् धनं, धर्मः, यशः, तोषः इति सर्वं वर्तते। त्वत्तोऽन्यत् मे प्रियं नास्ति।।११५।।

**भावानुवाद**–हे राम! आप हम लोगों के गोत्र, पिता, माता, भ्राता, भर्त्ता, मित्र, धन, धर्म, यश और तोष हैं। आपके अतिरिक्त मेरा कोई भी प्रिय नहीं है।।११५।।

**किं भक्त्या मम किमुक्त्या किं बहूक्त्या रघूद्वह।**
**सर्वत्र सर्वदा सर्वं ज्ञानमस्तु त्वदाश्रयम्[३]।।११६।।**

**व्याख्या**–हे राम! किं मम भक्त्या, किं मम उक्त्या पुनः पुनः कथनेन, किं वा बहूक्त्या हे रघुश्रेष्ठ! सर्वत्र सर्वदा सर्वं ज्ञानं त्वदाश्रितं भवतु। 'रामात्परं किमपि तत्त्वमहं न जाने' इति रामानन्दीयं वचनम्।।११६।।

**भावानुवाद**–हे राम! मेरी भक्ति से क्या? मेरी वाणी से क्या? पुनः पुनः कहने से क्या? हमेशा, सभी जगह मेरे सभी ज्ञान आप पर आश्रित रहे।।११६।।

**अशुचि शुचि वास्माकं चेतस्ततः किमिदं विभो-**
**र्जनकतनयाजानेर्जातं रजः पदपंकजे।**

---

१. (-तोन्य) मूले।
२. (प्रियं ।।) मूले।
३. (श्रयं ।।) मूले।

**वदतु विबुधो रथ्यातोये[१]ऽथवा यमुनाजले-**
**त्रिदशतटिनीनीरांतस्थे विशेषमशंकितः।।११७।।**

**व्याख्या**–अस्माकं चेतः शुचि वा भवतु अशुचि वा भवतु ततः हे विभो! किं भविष्यति। हे जनकतनयाजाने श्री सीतापते! तव पदपंकजे मम चित्तरूपं रजः जातम्। विबुधः रथ्यायां जले यमुनाजले वदतु तस्मान्नो हानिः, त्रिदशतटिनी नीरान्तस्थे गङ्गायास्तटे विशेषं अशंकितो वदतु।।११७।।

**भावानुवाद**–हे विभो! मेरा चित्त पवित्र हो या अपवित्र उससे क्या होनाहै? हे जानकी के पति श्री राम! हे सीतापति! आपके चरणकमल में मेरे चित्त रूप रज का स्पर्श ही मेरे सौभाग्य का प्रतीक है।।।११७।।

**स्वस्त्यस्तु ते रघुपते करुणैकमूर्त्ते**
**नर्त्ते भवंतमिह शर्म नरा लभंते।**
**तत्पीडितेतिदुरितैर्जगति स्वनाम**
**तातेश वांछितफलप्रदतामुपैति।।११८।।**

**व्याख्या**–हे करुणैकमूर्त्ते! रघुपते! ते स्वस्तिरस्तु। अहं भवन्तं प्राप्यं नर्ते। नराः शर्म लभन्ते। तत्पीडिते अति दुरितैः जगति स्वनाम, हे तातेश! वाञ्छितफलं प्रददातु माम्।।११८।।

**भावानुवाद**–हे करुणा की मूर्त्ति। हे रघुपति! आपका कल्याण हो। आप को पाकर मैं नाच उठता हूँ। जो लोग लज्जा को प्राप्त करते हैं और पश्चाताप करते हैं तो उससे पीड़ित होकर वाञ्छितफल मिल जाता है।।११८।।

**सीताखिलोपायनिजेप्सितार्थ-**
**दीनानुकम्पापरचित्तवृत्ते ।**

---

१. (येथवा) मूले।

**वाक्कायचेतो[1]ऽभिरभीप्सितास्यै**
**सीतापते! त्वां शरणं प्रपद्ये।।११९।।**

**व्याख्या**–हे सीतापते! सीता अखिलोपायरुपेण इप्सितार्थं ददाति। वाक्कायचेतोऽभिः अस्यै अभीप्सितास्म। हे सीतापते! त्वामहं शरणं प्रपद्ये।।११९।।

**भावानुवाद**–हे सीतापति श्री राम! सीता सभी समस्याओं का उपाय बनकर इप्सित फल प्रदान करती हैं। आपसे मैं वचन, शरीर तथा चित्त से अभिप्सित (श्री रामचरणरति रूप फल) चाहता हूँ। मैं आपका शरणागत हूँ।।११९।।

**इमां महामुद्गलभट्टदृष्टाम्**
**पठेद्यइष्टामुपचारमाला[2]म् ।**
**भवेत्तमालाङ्कुरकांतकान्तिः**
**सीतापतिस्तस्य परं प्रसन्नः।।१२०।।**

**व्याख्या**–इमां उपचारमालां महामुद्गलभट्टदृष्टां लिखित्यां च यः पठेत् तस्य कान्तिः तमालंकुरकान्तकान्ति सीतापतिरिव भवति। सीतापति तस्योपरि परं प्रसन्नो भवति। इति शम्।।१२०।।

**भावानुवाद**–इस महामुद्गलभट्ट प्रणीत उपचार माला को पढ़कर लोग अभीष्ट को प्राप्त करते हैं। उनकी कान्ति तमालाङ्कुरकान्ति जैसी हो जाती है। सीतापति श्री राम उनके ऊपर बहुत प्रसन्न हो जाते हैं।।१२०।।

**।। शुभं भूयात् ।।**

**।। समाप्त ।।**

□□

१. (तोभि) मूले।
२. (लां ।।) मूले।

